# प्रस्तावना

श्रीमान् प्रेमचन्द्रः (प्रेम चन्द) हिन्दीसाहित्यजगति प्रख्यातः । अस्य लघुकथाः उपन्यासाश्च हिन्दीसाहित्यस्य नूतनं पन्थानं व्यरचयन् हिन्दीभाषायाः लोकप्रियत्वं च व्यवर्धयन् । कथासम्राट् इति चास्य यथार्थं बिरुदं वर्तते । समाजस्य विविधक्षेत्राणां विभिन्नव्यक्तीनां विचित्रपरिस्थितीनां च निष्कृष्टः परिचयः वर्तते श्री प्रेमचन्द्रस्य । स्वातन्त्र्यसंग्रामकालिकस्य भरतवर्षस्य हृदयस्पन्दनं सम्यग्वेत्ति चासौ महाभागः । जनानां स्वान्तानि तेषु तेषु संनिवेशेषु कीदृशीं प्रतिक्रियाम् आश्रयन्तीति च सुष्ठु विभाव्य श्रीप्रेमचन्द्रः तच्चित्रणे असाधारण्या प्रतिभया यशस्वी भवति ।

भरतवर्षस्य आधुनिकीनां भाषाणां श्रेष्ठम्, ऐदंयुगीनं साहित्यं देववाण्याम् अवतारयितुं "सुधर्मा" पत्रिकया क्रियमाणेषु प्रयत्नेषु कथानाम् अनुवादस्य प्रकाशनम् अपि एकम् । मयात्र श्री प्रेमचन्द्रस्य रुचिरतरत्वेन मदभिमताः पञ्च कथाः अनूदिताः । मदीयाम् अल्पीयसीं देववाणीसपर्यां पुरस्कृत्य प्रथमावकाशो मह्यं दत्तः सुधर्मासंपादकैः इति तैः नितान्तम् उपकृतोऽस्मि । कृपालवः संस्कृतरसिकाः अनेन प्रयत्नेन तुष्यन्ति चेत् सफलं मम श्रमं मन्ये ।

इति

नागराजः

# ज्येष्ठभ्रातृवर्यः

मम भ्राता मदपेक्षया पञ्चभिः वर्षैः ज्यायान् आसीत् किन्तु केवलं तिसृभिः कक्ष्याभिः अग्रे । तेनापि तस्मिन्नेव वयसि विद्याभ्यासः आरब्धः, यस्मिन् मया । परन्तु विद्याभ्यासरूपे महत्त्ववति विषये त्वराशीलतामवलम्बितुं सः नेच्छति स्म । विद्याभ्यासरूपस्य भवनस्य आधारं दृढतमं सः अचिकीर्षत्, यदुपरि भव्यं हर्म्यं निर्मातुं वर्षस्य एकस्य कर्म द्वाभ्यां वर्षाभ्यां सः करोति स्म । कदाचित् त्रीण्यपि वर्षाणि तत्र अपेक्ष्यन्ते स्म । आधार एव चलिष्ठो न चेत्, भवनं दृढं कथं स्यात् !

अहं कनियानासं, स तु ज्यायान् । मम वयः नववर्षाणि, तस्य चतुर्दश । मम पालनायाः रक्षणायाश्च विषये तस्य पूर्णः जन्मसिद्धः अधिकार आसीत् । तस्य आज्ञां शासनं मन्वानस्यैव मम योग्यता आसीत् ।

स्वभावेनैव ममाग्रजः अध्ययनशीलः आसीत् । सर्वदा पुस्तकमुद्घाट्य उपविष्टः स दृश्यते स्म । कदाचित्तु प्रायः चिन्तायाः विश्रमार्थं प्रतिलेख्यपुस्तके (Copy Book) अभ्यासपुस्तकस्य कवचे वा पक्षिणां शुनां बिडालानां वा

चित्राणि लिखति स । तदा तदा एकमेव नाम शब्दं वाक्यं वा दशकृत्वः विंशतिकृत्वो वा सः अलेखीत् । किमपि एकं पद्यं वारं वारं सुन्दरैः अक्षरैः सः प्रतिलिखति स । कदाचिदेतादृशीं शब्दयोजनां करोति स यस्यां न कश्चिदर्थः भवेत्, नापि किञ्चित् सामञ्जस्यम् । एकदाहं तस्य लेखपुस्तके दृष्टवान् लिखितं यथा "विशिष्टः धनवान्, भ्रातरः भ्रातरः वस्तुतः भ्रातरौ, राधाश्यामौ, श्रीयुतः राधाश्यामः, एकघण्टापर्यन्तम्" । एतदग्रे च एकस्य मनुष्यस्य मुखं चित्रितमासीत् । अस्याः प्रहेलिकायाः क्रमप्यर्थं निर्गलयितुं महान्तं प्रयत्नं तु अहमकरवम् । किन्तु असफलः अभवम्, तमेव प्रष्टुं न मम साहसमभूत् । सः नवम्यां कक्षायामासीत्, अहं तु पञ्चम्याम् । तस्य रचनानां परिज्ञानाय मम प्रयत्नः प्रांशुलभ्ये फले वामनस्य यत्नमनुकुर्यात् किल ।

मम मनः पठने सर्वथा न लगति स । एकघण्टापर्यन्तमपि हस्ते पुस्तकधारणं पर्वतधारणायते स । अवकाशे लब्धे सति झटिति छात्रावासात् बहिः निर्गत्य क्रीडाङ्गणमह प्रायः आगच्छम्, कदापि पाषाणखण्डं क्षिपन्, कदापि कर्गजशलभान् उड्डाययन् कालमनयम् । यदि कोऽपि सखा लब्धोऽभवत्, किं वा प्रष्टव्यम् ! कदापि

प्राकारं समारुह्य कूर्दामहे, कदापि महाद्वारस्योपरि उपविश्य यानममिनयामहे, तमेव अग्रत: पश्चात् च चालयन्तः मूचार (Motar) या :स्य आनन्दं लभामहे । किन्तु प्रकोष्ठं पुनरागत्य भ्रातृदर्यस रुद्ररूपं दृष्ट्वा प्राणा एव शुष्का जायन्ते स्म ।

ज्येष्ठभ्रातुः प्रथमः प्रश्नः अभूत् " क्वासीः !" । सदा अयं प्रश्नः अनेनैव ध्वनिना पृच्छ्यते स्म । अस्य मदीय-मुत्तरं मौनमात्रमासीत् । "किञ्चिद् बहिः क्रीडन्नासम्" इत्युत्तरं मुखात् किं न निरगलत् इति न जाने । मम मौनमेव वदति स्म यन्मया अपराधः अभ्युपगतः इति । रोषभरितैः वचनैः मम सत्कारः एक एव भ्रातुः प्रतिमाता शिक्षा आसीत् ।

" एवमाङ्लभाषां पठसि चेत् , सकलं जीवनकाल पठित्वापि एकं वाक्यं नाधिगमिष्यसि । आङ्गल्याः पटन नाम नास्ति लघ्वी क्रीडा यां यः कोऽपि क्रीडेत् । अन्यथा सर्वे डित्थाः डवित्थाश्च आङ्गल्यां विद्वांसः ;अभविष्यन् । एतदर्थं नक्तं दिवं लोचने बाधनीये, रक्तं क्षयनीयं, तदैव कदाचिदेषा विद्या अधिगम्येत । तत्रापि किं ! कथनमात्राय अधिगम्यते । महान्तो विद्वांसोऽपि शुद्धामाङ्गलीं लेखितुं न पारयन्ति, भाषणं तु दूरे स्थितम् ।

मां दृष्ट्वापि त्वं पाठं न कलयसि ? पृच्छामि, किं त्वं मूकबधिरः ? त्वं पश्यसि, अहं कियत् परिश्राम्यामि । अथ न पश्यसि, तर्हि तव अक्ष्णोः अयमपराधः, तव बुद्धेर्वा । इयन्तः विनोदमेलाः भवन्ति । किं त्वं कदापि मां तान् द्रष्टुं यान्तमद्राक्षीः ? प्रत्यहं क्रिकेट् हाकीस्पर्धाः प्रचलन्ति । अहं तत्सविधेऽपि न यामि । सर्वदा पठन् एव वर्ते । तथापि एकैकस्यां कक्ष्यायां द्वे द्वे त्रीणि त्रीणि वा वर्षाणि भवामि । एवं स्थिते त्वं कथं वा खेलने कूर्दने च कालं यापयित्वा उत्तीर्णताया-माशां रक्षसि ? मम द्वित्राणि वर्षाणि भवन्ति, त्वया तु एकस्यां कक्ष्यायां सर्वं जीवितं क्षपयिष्यते । त्वया इत्थमेव वयः क्षपणीयं चेत् काममस्तु । गृहं गत्वा सानन्दं दण्डक्षेपक्रीडां क्रीड । पितुः कष्टार्जितं वित्तं कस्मात् व्यर्थीकरोषि ?"

अहं वाक्प्रहारमनुभूय अश्रूणि वाहयितुं प्रारब्धवान् । उत्तरं किमासीत् ? मया अपराद्धे वाग्बाणान् कोऽन्यः सहते । भ्रातृवर्यः उपदेशकलायां निपुण आसीत् । एतादृशान् संलग्नान् व्याहारान् स ब्रूते, एतादृशान् सूक्तिबाणान् प्रयुङ्क्ते, ये मम मनः भिन्दन्ति, यैः मम धैर्यं च गलति । एवं प्राणपणेन परिश्रमितुं शक्तिः मयि

नामी" ! मया निराशया अहं कञ्चित् कालं चिन्तयामि स्म " कुतो वा गृहं न गच्छेयम् ! यत्कर्म मम शक्तेः बहिः वर्तते, तत्र हस्तं प्रसार्य कस्माद् वा स्वजीवितं व्यर्थं कुर्याम् ! " मया मम मूर्खत्वमपि अङ्गीकृतं, किन्तु तादृशं परिश्रमं स्मरतः शिरः चक्रवत् भ्रमति स्म। किन्तु द्वित्रघण्टावेलायां निराशायाः मेघाः अपसरन्ति स्म, अहं च " इतः परं मनः प्रणिधाय पठिष्यामि " इति निर्णयं करोमि स्म। झटिति वेलापट्टिकामपि सज्जीकरोमि स्म। प्रथमं विना हस्तलेखं, विना योजनां किमपि कर्म कथं कर्तुं शक्येत ! वेलापट्टिकायां खेलाकूर्दनादेः सर्वथा नामापि नासीत्।

प्रातः उत्थानं, षड्वादनवेलायां मुखहस्तधावनं, उपाहारस्वीकारः, पठितुमुपवेशनम्। षड्वादनतः अष्टवादनं यावत् आङ्ग्ली, ततो नववादनपर्यन्तं गणितं, ततः अर्धघण्टा इतिहासपठनाय। ततो भोजनं शाला च। सार्धत्रयवादने शालायाः प्रत्यागम्य अर्धघण्टायाः विश्रामः। चतुर्वादनतः पञ्चवादनपर्यन्तं भूगोलशास्त्रं, ततः षड्वादनं यावत् व्याकरणम्। ततः अर्धघण्टा विद्यार्थिनिलयस्य अङ्गणे परिभ्रमणं, सार्धषड्वादनतः सप्तवादनपर्यन्तं च आङ्ग्लवाक्यरचना, ततो भोजनानन्तरं अष्टघण्टातः नव-

यत्ने बद्धः वर्तते, तथा त्यत्कारं कटूक्तीश्च शृण्वन्नपि अहं खेलाकूर्दनादि तिरस्कर्तुं नाशक्नम्।

वार्षिकी परीक्षा अभूत्। भ्रातृवर्यः विफलो जातः अहं सदुत्तीर्णः कक्ष्यायां प्रथमश्चाभूवम्। आवयोः मध्ये केवलं द्वयोः वर्षयोः अन्तरमवशिष्टम्। मम मनसि आकाङ्क्षा जाता भ्रातृवर्यं हस्ते गृहीत्वा प्रष्टुम्–भवतः सा घोरा तपस्या क्व गता ? मां पश्यतु भवान्, सानन्दं खेलन्नपि कक्ष्यायां प्रथमोऽस्मि–इति। किन्तु सः एतावत् दुःखी उदासीनश्चासीत् यन्मम तस्मिन् हार्दी सहानुभूतिः उदपद्यत। तस्य व्रणे लवणक्षेपणं लज्जास्पदं च प्रत्यभात्। आम्, अधुना मम मर्मैवोपरि अभिमानः उत्पन्नः आत्माभिमानश्च अवर्धत। भ्रातृवर्यस्य ममोपरि तादृशः प्रभावः नावशिष्टः। स्वच्छन्दं खेलासु कूर्दनेषु च प्रसक्तः अभवम्। हृदयं दृढमासीत्। यदि सः पुनः मयि कटूक्तिं प्रयुंक्ते, तर्हि स्पष्टं कथयिष्यामि "भवान् स्वरक्तमपि क्वाथयित्वा किं वा लक्ष्यमविध्यत् ? अहं खेलन् कूर्दमानः एव कक्ष्यायां प्रथमोऽस्मि।"

जिह्वया एवं सोत्रासं वक्तुमशक्तेऽपि मयि मम वर्तनया स्पष्टमेतद् भवति स्म यत् सम्प्रति अहं भ्रातृवर्यात् न त्रस्यामि इति। भ्रातृवर्यः इदं प्राज्ञासीत्। तस्य हि

सहजा बुद्धिः अतीव तीक्ष्णा । एकदा च मयि मन्ये समय दण्डक्षेत्रक्रीडायां यापयित्वा भोजनवेलायामुपस्थिते, मन्ये भ्रातृवर्यः खड्गं समाकृष्य ममोपरि आक्रमणमकरोत् " तर्कयामि, ऐषमः उत्तीर्णोऽसि, कक्षायां प्रथमोऽसि इति गर्वस्तव संजातः । किन्तु भ्रातृक, गर्वः महीयसामपि न शोभते, तव का वार्ता ! इतिहासे रावणस्य वृत्तं त्वया पठितं स्यात् । तस्य चरित्रात् त्वं कं वा पाठमग्रहीः ! अथवा केवलं तदपाठीः ! परीक्षोत्तीर्णताप्राप्तिमात्रं न किमपि, यद्गण्यते तदस्ति बुद्धिविकासाख्यम् । यत्पठसि, तस्याभिप्रायं गृहाण । रावणो भूमण्डलस्य स्वामी आसीत् । एतादृशान् राज्ञः चक्रवर्तिनः कथयन्ति । अधुना आंग्लानां राज्यस्य विस्तारो महान् । परं चैतान् चक्रवर्तिनः कथयितुं शक्नुमः । विश्वस्मिन् अनेके राष्ट्राः आंग्लानामाधिपत्यं नाङ्गीकुर्वन्ति । ते हि सर्वथा स्वतन्त्राः । रावणस्तु चक्रवर्ती आसीत्, जगतः सर्वे महीशाः तस्मै करं ददति स्म । महत्तराः देवा अपि तस्य दासा आसन् । किन्तु तस्य कीदृशः अन्तो जातः ! गर्वः तं नामावशेषमकरोत् । तस्मै जलं दातुमपि कश्चित् नावशिष्टः । मनुष्यः किमपि कुत्सितं कामं करोतु । परं तु अभिमानं न कुर्यात्, दर्पवशो न च । अभिमानं वदति चेत्

दीनेभ्यो जगतश्च दूरे भवति। शैतानस्य वृत्तमपि त्वया पठितं स्यादेव। तस्य हि एवममिमानः समुत्पन्नः यत् तदधिकः ईश्वरभक्तः कोऽपि नास्तीति। अन्ततः स्वर्गात् सः नरके क्षिप्तः। शाहेरुमः अपि एकदा अहङ्कारमवहत्। भिक्षां याचं याचं स मृतः। त्वं तु केवलमेकस्यां कक्ष्यायामुत्तीर्णोऽसि, एतावतैव तव शिरः परिभ्रमति। एवं चेत् तवाग्रेगमनं समाप्तम्। एतद् विजानीहि, यत्त्वं स्वपरिश्रमेण उत्तीर्णः नासि, किन्तु " अन्धस्य हस्ते विहगोऽवलग्नः "। परं, विहगः एकदा तथा हस्ते लग्नः स्यात्, न वारं वारम्। कदाचिन दण्डक्षेपक्रीडायामपि अनुद्देशेनापि लक्ष्यं भेद्यते। एतावता कोऽपि सफलः क्रीडापटुः न जायते। सफलः पटुः स एव, येन लक्ष्यं सदा भेद्यते। मम वैफल्यं मेदानीं स्मार्षीः। मम कक्ष्यां प्रविशसि चेत्, तदा दन्तेषु स्वेदः उत्पत्स्यते यदा बीजगणितस्य ज्यामितेश्च लोहचणकाः चर्वणीया भविष्यन्ति। ........ लक्षवारं विफलोऽहं स्याम्, तथापि त्वत्तः वर्षीयानस्मि, जगतः अनुभवः त्वत्तः ममाधिकः अस्ति। यदहं वदामि, तद् सम्यक् गृहाण, न पश्चात् तप्स्यसे "

शालायाः समयः निकट आसीत्, अन्यथा एषा उपदेशमालिका कदा समाप्तिं गच्छेदिति ईश्वर एव जानीयात्। भोजनमपि मह्यं नारोचत। परीक्षायामुत्तीर्णायामपि एवं तिरस्कारः क्रियते, यदि अनुत्तीर्णः स्यां तर्हि प्रायः प्राणा एव निष्कासयेरन्।

भ्रातृवर्येण स्वकक्षायाः पठनस्य यद् भयङ्करं चित्रं रचितं, तत् मां नूनं भीतमकरोत। शालां विहाय गृहं नाधाव कथम् इत्येव विस्मयनीयम्। किन्तु एतावन्तं तिरस्कारं समनुभूयापि पुस्तकेषु ममारुचिः तदवस्था एव आसीत्। क्रीडायाः कमपि अवसरं न पर्यत्यजम्। अपठं, किन्तु अतिस्वल्पम्। एतावदेव यत् दिवसस्य कार्यं समाप्येत, कक्षायां च शिरोऽवनतं च न स्यात्। आत्मनि यः विश्वासः समुत्पन्न आसीत् सः ह्रसितोऽभूत्, पुनः चोराणामिव जीवनं समयाप्यत।

वार्षिकी परीक्षा पुनः जाता। कोऽपि एतादृशः योगः आसीत् येन अहमुत्तीर्णः अभवं, भ्रातृवर्यश्च अनुत्तीर्णः अभूत्। अहं तु अधिकं न पर्यश्राम्यम्। परं न जाने कथं कक्ष्यायां प्रथमः अभवम्। मम स्वयमाश्चर्यमभूत्। भ्रातृवर्यः प्राणान्तकं परिश्रमं कृतवानासीत्। पठ्यस्य

एकमपि शब्दं मः द्रष्टुं कृतवान्, रात्रौ दशवादन-पर्यन्तमेकत्र, प्रगे चतुर्वादनतः अन्यत्र, षड्वादनतः सार्धनववादनपर्यन्तं शालागमनात् प्राक्। तस्य मुखमुद्रा कान्तिहीना जाता, तथापि अनुकम्प्यः सः अनुत्तीर्णः। मम तस्मिन् दया उत्पन्ना। फलिते प्रकटिते सः रोदितुं प्रारभत, अहमपि अन्वसरम्। मम उत्तीर्णतायाः सन्तोषः अर्धीभूतः। अहमपि अनुत्तीर्णः यदि अभविष्यं, भ्रातृवर्यस्य एतावत् दुःखं नाभविष्यत्। किन्तु विधिवचनं कः उल्लङ्घेत!

मम भ्रातृवर्यस्य च मध्ये एकमात्रकक्ष्यायाः अन्तर-मवशिष्टम्। मन्मनसि एका कुटिला भावना उदिता यथा "यदि भ्रातृवर्यः एकस्मिन् वर्षे पुनः अनुत्तीर्णो भविष्यति, तर्हि अहं तत्समानो भविष्यामि, ततः केन वा आधारेण सः मयि कटूक्तिं प्रयुञ्जीत" ! इति। किन्तु अहमिमं नीचं विचारं मनसः प्रसभं निरकासयम्। अन्ततः सः मां मम हितमनुलक्ष्यैव अवहेलयति। अवश्यं सम्प्रति तद्वचनानि मम अप्रियाणि भान्ति। तथापि प्रायशः अयं तदुपदेशप्रभाव एव स्यात् यदहं सुलभं जातोऽस्मि उत्तीर्णः तत्रापि उत्तमैः अङ्कैः।

अधुना भ्रातृवर्यः अतीव मृदुः जातः । बहुवारं मां कटु वक्तुं लब्धावकाशोऽपि सः धैर्येण कर्मशीलः अभूत् । प्रायः संप्रति सः स्वयं समज्ञासीत् यत् तस्य मम निन्दने अधिकारः नास्ति, अथवा अस्ति चेत् अल्प एव । मम स्वच्छन्दता अवर्धत । अहं तत्सहिष्णुतायाः अनुचितं लाभं स्वीकर्तुं प्रारब्धवान् । मम एषा भावना उत्पन्ना यत् पठित्वापि अपठित्वापि अहं समुत्तीर्णः भवाम्येव, मम मेधा बलवती इति । एवं च भ्रातृवर्यभयात् यत् किञ्चित् अपठं पूर्वं, तदपि पर्यत्यजम् ।

मम पटपतङ्गस्य (kite) उड्डायने नूतनी रुचिः उत्पन्ना । सर्वः समयः पटपतङ्गविनोदाय उपायनीकृता । तथापि मम भ्रातृवर्ये महद् गौरवं वर्तते स्म, तेन तत्-परोक्ष एव पटपतङ्गोड्डायनं मम प्रावर्तत । कलापप्रदानं, कर्णबन्धनं, पटपतङ्गस्पर्धानामायोजनम् इत्यादयः, समस्याः सर्वाः गुप्तरूपेणैव परिह्रियन्ते स्म । "मम मानः मर्यादा च अस्य दृष्टौ संप्रति हीयेते" इति सन्देहाय भ्रातृवर्यस्य चेतसि अवकाशं दातुं नाहमैच्छम् ।

एकस्मिन् दिने सन्ध्यासमये छात्रावासस्य किञ्चिद्दूरे अहमेकं पटपतङ्गं लुण्ठितुं सवेगं धावन् आसम् । अक्षिणी

आकाशे अवर्तेतां मनश्च तस्मिन् गगनपथिके यः मन्दं दोलायमानः भूमिं प्रति पतति स्म। कोऽपि स्वर्गात् निर्गनः विरक्तेन मनसा नवं संस्कारं प्राप्तुं समागच्छन्निव आत्मा। बालकानां महती सेना एका लगुडान्। सकण्टकान् वंशान् च दधाना तस्य स्वागतं कर्तुं धावन्ती आसीत्। कस्यापि अग्रे किं, पश्चात् किं इति अवधानं नासीत्। मन्ये सर्वेऽपि पटपतङ्गेन साकमाकाशे उड्डयन्ते स्म, यत्र सर्वं समतलमस्ति, न मृचारवाहनानि, न पट्टिकाशकटानि, न शकटानि।

सहसा भ्रातृवर्येण सह मम सन्धिः जातः, प्राय· सः विपणेः निवर्तते स्म। सः तत्रैव मां हस्ते गृहीत्वा उग्रभावेन अगदत् " एतैः वीथीवासैः बालैः साकमर्धाणक-मूल्याय पटपतङ्गाय धावन् कथं न लज्जसे ? तव एत-द्विषयेऽपि चिन्ता नास्ति यत्त्वं संप्रति न नीचैः कक्ष्यायां वर्तसे अपि तु अष्टम्यां कक्ष्यायां वर्तसे, मदपेक्षया केवल-मेकया कक्ष्यया अधस्तादसि। अन्ततो मनुष्येण स्वस्थानविषये अवधानं देयम्। तादृशः काल आसीत् यदा अष्टमीं कक्ष्यां समुत्तीर्य जनाः उपमण्डलाधिकारिणः अभवन्। मध्यमशालीयान् बहून् अहं जानामि, ये अधुना प्रथमस्तरस्य न्यायपाः परिवीक्षकाश्च सन्ति।

अष्टमकक्ष्यापदवीकाः भूयांसः अस्माकं नायकाः पत्रिका संपादकाश्च सन्ति । तेषामाधीन्ये महान्तो विद्वांस कर्म कुर्वन्ति । त्वमपि तस्यामेव अष्टम्यां कक्ष्यायां सन् वीथीभ्रमणशीलैः मूर्खैः साकं पटपतङ्गाय धावसि । मम तवास्याः अल्पमतितायाः विषये दुःखं भवति । त्वं कुशलः, तत्र न संशयः, तेन कौशलेन किं प्रयोजनं यदस्माकमात्मगौरवं हन्यात् ! त्वया मनसि एवं चिन्त्येत यन्मम भ्रातृवर्यादहं केवलमेकया कक्ष्यया हीनोऽस्मि. तस्मात् तस्य ममोपदेशे कोऽपि अधिकारो नास्तीति । किन्तु एष एव भ्रेषः । अहं त्वत्तः पञ्चभिः वर्षैः ज्यायानस्मि । अद्य त्वं ममैव कक्ष्यामागच्छ अपि च परीक्षाणामेवैव दशा अस्ति यत्त्वमस्मिमे वर्षे मम मम कक्ष्यो भविष्यसि, प्रायशः गते पुनरेकस्मिन् वर्षे मम अग्रे एव भवेः—किन्तु मम तव च मध्ये पञ्चवर्षाणां यदन्तरमस्ति, तद् त्वमेव किम्, भगवानपि न निवारयितुं शक्नुयात् । अहं त्वत्तः पञ्चभिः वर्षैः ज्यायान् अस्मि, सदा भविष्यामि च । प्रपञ्चस्य जीवनस्य च यो मदनु भवोऽस्ति, तस्य समानत्वं त्वं कदापि न लभेथाः, त्वम् एम् ए. तथा डि. लिट्., तथा डि. फिल्.—अपि कामं सन्नपि ।

............तस्मात्, हे भ्रातः, इमां भावनां मनसो निष्कासय यत्त्वं मम सामीप्यमागतोऽसि इति। मयि पश्यति त्वमपथे चलितु न पारयसे। एवं त्वं नानुमन्यसे चेत् तर्हि अहं (हस्तमुष्टिं दर्शयित्वा) अस्यापि प्रयोगं कर्तुं शक्नोमि। अहं जानामि यत्तव मद्वचनं विषं भाति"।

अहं तस्य अनया नवीनया युक्त्या नतमस्तकोऽभूवम्। स्वलघुतायाः अनुभवो मे जातः, भ्रातृवर्यं प्रति मम मनसि श्रद्धा च उत्पन्ना। अहं सजलनयनः अकथयम् " कदापि नैव। भवता यत् प्रोच्यते तत् सर्वथा सत्यम्। मां प्रति सर्वं कथयितु भवतः अधिकारः अस्ति।"

भ्रातृवर्यः मां कण्ठे आलिङ्ग्य अवदत् "पटपतङ्गोड्डायनं नाहं निषेधामि। मम मनोऽपि तद् वाञ्छति। किन्तु किं करोमि, यदि स्वयमपथे गच्छामि, तव रक्षा कथं करोमि! इदं कर्तव्यं मम शिरसि वर्तते किल।"

दैवसंयोगात् तस्मिन्नेव समये एकः छिन्नः पटपतङ्गः आवयोः उपरि अयासीत्। तस्य पुच्छं लम्बते स्म। तस्य पश्चात् बालकानां गणः धावन्नागच्छति स्म। भ्रातृवर्यः प्रांशुरस्ति स्म। उत्प्लुत्य सः पटपतङ्गस्य पुच्छमगृह्णीत्। सवेग छात्रावासं प्रति अधावत्। अहं च तस्य पश्चात् अधावम्।

---

# रसिकः सम्पादकः

"नवरस" पत्रिकायाः सम्पादकस्य पण्डितचोखेलाल-शर्मणो धर्मपत्न्याः स्वर्गगमनानन्तरं तस्य स्त्रीषु अनुराग-विशेषः उत्पन्नोऽस्ति, रसिकतायाः परिमाणमपि किञ्चिद् प्रवृद्धम्। पुरुषाणामुत्तमोत्तमानपि लेखान् व्यर्थकर्गजराशौ क्षिपति; परं नारीमणीनां लेखाः कीदृशा अपि सन्तु नाम, क्षिप्रं स्वीकरोति सः। अपि च लेखप्राप्तिपत्रेण साकं लेखस्य प्रशंसा एतादृशैः शब्दैः क्रियते यथा "भवत्याः लेखं पठित्वा उरसि हस्तं धृत्वा अहं स्थितः, गतं जीवनं ममाक्ष्णोः पुरः मूर्तिमत् समागतम्" इति अथवा "भवत्याः भावाः साहित्यसागरस्य उज्ज्वलानि रत्नानि येषां कान्तिः कदापि न हीयते" इति। कवितास्तु हृदयस्य तरङ्गाः, विश्व-वीणायाः अमरतानाः, अनन्तस्य मधुरा वेदनाः, निशायाः नीरवगानानि वा। प्रशंसया साकं दर्शनाय उत्कटः अभिलाषोऽपि प्रकटीक्रियते स्म यथा "यदि भवती कदापि अत्र आगच्छेत्, तर्हि नाहं विस्मरणीयः। एतादृश्याः कवितायाः सृष्टिं या कुर्वती तद्दर्शनभाग्यं मया लभ्यते चेत्, आत्मानं धन्यं मन्ये"—इति।

लेखिकाः अनुरागमयेन प्रोत्साहेन भरितानि पत्राणि प्राप्य सीमातीतं सन्तोषं प्राप्नुवन्ति स्म । ये लेखाः निर्भाग्यभिक्षुका इव कियतीनामपि पत्रिकाणां द्वारं दृष्ट्वा निराशाः न्यवर्तन्त, तेषामत्र एतावान् आदरः । इदंप्रथमतया एष संपादको जातोऽस्ति, यः गुणानां परीक्षकोऽस्ति । इतरे सर्वे सम्पादकाः सर्वज्ञंमन्याः, । खलु स्वसमान कमपि न गणयन्ति । अल्पीयसी सम्पादकता: यदि लब्धा, किमपि राज्यं लब्धं मन्यन्ते । यदि एतैये सार्वकारिकं पदं लभ्येत, तर्हि सर्वत्र कोलाहलं सृजेयुः । सर्वकारः एषां वचनं न आकर्णयति, तेन सुष्टु कृतं किल, यः विशेषाज्ञां प्रासारयत् सम्पादकान् नियन्त्रयितुम् । स्त्रीद्वेषं कुर्वन्ति खलु, तस्यैव अपराधस्य अयं दण्डः । किन्तु एषः (शर्मा) अपि संपादकः अस्ति, यस्य नास्ति अहंकारलेशः । तत्रापि जगद्विख्यातस्य पत्रस्य संपादकः । नवरसो हि पत्राणां राजा ।

चोखेलालशर्मणः पत्रिकायाः ग्राहकसंख्या महता वेगेन अवर्धत । यदा यदा पत्रवाहः आगच्छत्, तदा धन्यवादानां प्रवाह एव आगत इव । लेखिकाः तं पूजयितुमेव प्रारभन्त । विवाहस्य, उपनयनस्य, पुनर्विवाहस्य, तद्विच्छेदस्य जन्मनः मरणस्य च वार्ताः आगन्तु प्रारभन्त च । कापि

तस्य आशीर्वादं याचते, कापि तस्य मुखात् सान्त्वनायाः द्वित्रान् शब्दान् श्रोतुमिच्छति, कापि तं गृहसङ्कटस्य परामर्शं पृच्छति । तथा मासे पञ्चषाः महिलाः तस्मै (शर्ममहोदयाय) दर्शनमपि ददति स्म । शर्मवर्यः तासामागमनस्य पत्रं तन्त्रीवार्तां वा लब्ध्वा अविलम्बं निस्स्थानं गत्वा तासां स्वागतं करोति स्म, महता आग्रहेण ताः दिनं दिनद्वयं वा वासयति स्म, तासामातिथ्यं च सम्यक् करोति स्म । सम्पादकेन चलचित्राणां प्रवेश-पत्राणि विना धनं लभ्यन्ते खलु, ताः अपि यथेच्छं चित्राणि दर्शयति स्म । महिलाः शर्मणः सद्भावेन मुग्धाः भूत्वा प्रतिगच्छन्ति स्म ।

प्रसिद्धिस्तु एवं वर्तते यत् शर्मवर्यस्य बह्वीभिः लेखिकाभिः साकं सम्बन्धो घनिष्ठोऽस्ति । किन्तु एतद्विषये वयं निश्चप्रचं किमपि वक्तुं न शक्नुमः । वयं तु एतावज्जानीमहे यत् याः देव्यः एकवारमत्र आगताः, ताः शर्ममहोदयस्य अनन्य भक्ताः भवन्ति । वराकः सः साहित्यकुञ्जस्य तपस्वी वर्तते । स्वविधुरजीवनस्य निराशाः अन्तराले संचिताः स्यात् मूकवेदनाया प्रेममाधुर्यस्य रसपानं कुर्वाणोऽस्ति । संपादकस्य जीवने यो दोष आसीत्, तस्य विधिवदपि पूर्णं महिलाः समर्थनमकुर्वन् । तासां

हि पूर्णात् भाण्डागारात् यदि कस्मै अपि क्षुधिताय प्राणिने अल्पीयसीं तृप्तिं दातुं शक्येत, तर्हि भाण्डागारस्य भूषा एषा। कापि देवी प्रेषणद्वारा (Post) चटनीं प्रापयति, कापि लड्डुकानि। एका पूजार्थमूर्णासनं स्वहस्तेन निर्माय प्रैषयत्। एका तु प्रतिमासमपि एकदा आगत्य शर्मवर्यस्य वस्त्राणि समीकृत्य गच्छति स्म। अपरा मासे त्रिः चतुः वा आगत्य स्वादूनि खाद्यानि निर्माय शर्माणं भोजयति स्म। सम्प्रति सः कस्याप्येकस्य न, अपि तु सर्वेषां बन्धुरभूत्। स्त्रीणामधिकारस्य समर्थने शर्मापेक्षया अधिकः क वा दृश्येत ? पुरुषेभ्यः शर्मा सर्वदा केवलामालोचनां प्राप्नोत्। श्रद्धामथ्याः सहानुभूतेः आनन्दं तु सः स्त्रीभ्य एव अलभत।

एकस्मिन् दिने सम्पादकेन एतादृशी कविता लब्धा यस्यां लेखिका स्वीयस्य उग्रप्रेम्णः रूपं दर्शितवती। अन्यः कोऽपि सम्पादकः तां कवितामश्लीलां मन्येत। किन्तु चोखेलालशर्मा एतस्मिन् विषये अतीव उदारशील आसीत्। कवितायाः सुन्दराणि अक्षराणि, लेखिकायाः मोहकं नामधेयं च सम्पादकमहाशयस्य पुरस्तात् तस्याः एकं कल्पनामयं चित्रमस्थापयतामिव। भावुका प्रकृतिः, कोमलं गात्रं, याचनाभरिते नेत्रे बिम्बसदृशः अधरः,

चम्पकवर्णः, अङ्गे अङ्गे पूर्णा चपलता। निर्यासः (Gum) इव प्रथमं शुष्का कठोरा च, किन्तु आर्द्रभावे या संलग्ना भवति। शर्मवर्यः कवितां द्विः त्रिः अपठत्। प्रतिवारं तस्य मनसि उद्वेगः समुदपद्यत।

किं त्वं मन्यसे मां परित्यज्य धावसि !
धावितुं शक्नोपि !
अहं त्वत्कण्ठे हस्तावर्पयामि
अहं तव मध्ये करपाशं क्षिपामि
अहं तव पादौ गृहीत्वा निरुणध्मि
तवोरसि शिरो न्यस्यामि।
किं त्वं मन्यसे मां परित्यज्य धावसि !
मां त्यक्तुं शक्नोपि !
अहं तवाधरे मम कपोलमासञ्जयामि
तस्मिन् पात्रे या मदमिश्री सुधा वर्तते
तां पीत्वा त्वं मत्तो भविष्यसि।
किं त्वं मां परित्यज्य पलायसे !
—कामाक्षी

शर्मवर्यस्य अस्यां कवितायां प्रतिवारमपि पद्ये नवो रसः प्रतिभाति स्म। सः तस्मिन्नेव क्षणे कामाक्षीदेव्यै इदं पत्रं व्यलिखत्—

"भवत्याः पत्रं पठित्वा मम चित्तस्य या अवस्था सम्पन्ना, तां नाहं कथयितुं शक्नोमि। हृदये एका एतादृशी तृष्णा जागृता, या मां भस्म करोति। न जाने, इमां कथं शान्तां कुर्याम्? अलं तावत्, इयमाशा वर्तते यत् तत एव अस्याः शीतलतापादिनी सुधापि लभ्येत, यतः इयं तृष्णा प्राप्ता। मनः मतङ्गज इव शृङ्खलां भित्त्वा धावितुमिच्छति। यस्मिन् हृदये एष भावः उत्पन्नः, तस्मिन् प्रेम्णः कियान् अक्षयः निधिः स्यात्, तत्रापि तस्य प्रेम्णः यः स्वसमर्पण एव आनन्दं लभते। अहं भवतीं सत्यं वच्मि, एतादृशीं कवितां नाहं पूर्वं श्रुतवान्। एषा कविता ममोरसि यां झञ्झां समुदपादयत्, सा मम वैधुरीं शान्तिं छिन्नां भिन्नां च कृतवती। भवती निर्धनस्य एकस्य पर्णकुट्यां वह्निमज्वालयत्। किन्तु मन्मनः नाङ्गीकरोति यदेतत् विनोदक्रीडामात्रम्। कवितायाः शब्देषु मम एतादृशं हृदयं निगूहितं दृश्यते यत् प्रेम वेदनां सोढवत्, यच्च लालसतायाः अग्नौ प्रतप्तम्। यदि भवत्याः दर्शनभाग्यं लभेत, तर्हि तन्मम परमं सौभाग्यं भावयेयम्। एषा कुटी अनुरागस्य उपायनं स्वीकृत्य भवत्याः स्वागतं कर्तुमुत्कण्ठया तप्यमानास्ति।"

तृतीय एव दिवसे अस्य पत्रस्य उत्तरं समागतम्।

कामाक्षी अतीव भावुकतापूर्णैः शब्दैः कृतज्ञतां प्रकटीकृत्य स्वागमनस्य दिनं तत्र निर्दिष्टवती ।

अथ भवति कामाक्ष्याः शुभागमनम् । शर्मवर्यः प्रातरेव क्षौरमकारयत्, फेनकेन (soap) स्नानद्रोण्यां स्नानमकरोत्, उत्तमं 'खादी'वसनं, गौरवर्णं कौशेयोत्तरीयं चाधारयत् । एवं सालंकारं शर्मवर्ये कार्यालयं समागम्योपविष्टे, समस्तः कार्यालयः सौरभमय इव अभूत् । कार्यालयस्यापि निर्मलीकरणं सुप्रवर्तितमासीत् । प्रघाणे वृक्षकुण्डानि स्थापितानि । चतुष्पद्यां (table) पुष्पधान्यः सज्जिताः । पट्टिकाशकटं नववादनवेलायामायाति, एतर्हि केवलमष्टवादनवेला, सार्धनववादनवेलायां सा आगमिष्यति । अस्यामुत्कण्ठायां किमपि कर्म न प्रचलति । शर्मवर्यः वारं वारं घटीं पश्यति, पुनः पुनः दर्पणे स्ववदनं दर्शं दर्शं प्रकोष्ठे एव इतस्ततः यातायातं करोति । श्मश्रुषु द्वित्राः केशाः पलिताः दृश्यन्ते, किन्तु सम्प्रति तानुत्पाटयितुं किमपि साधनं नास्ति । आस्तां नाम, का वा हानिः ! एवं हि शोभा वर्धतेतराम् । प्रेमा यदा श्रद्धया साकमागच्छति, तदा सः तादृशः अतिथिर्भवति यः उपायनेन सह आयाति । यूनां प्रेमा व्ययकारि वस्तु, किन्तु महात्मनां महात्मत्वस्य समीपमासादितवतां

च प्रेम प्रत्युत अन्यत् किमपि आनयति। युवानः बहुमूल्यैरुपायनैः शोभां जनयन्ति। तामेव महात्मानो महात्मकल्पाश्च केवलाशीर्वादेन। निश्चप्रचं सार्धनव वादनवेलायां परिचारकः आगत्य परिचयपत्रीं प्रादात्। तस्यां लिखितमासीत् 'कामाक्षी' इति।

शर्मवर्यः तां प्रवेशयितुं परिचारकमाज्ञापयत्। एक वारं पुनः दर्पणे स्वमुखमपश्यत्। ततः एक बृहद्ग्रन्थं पठितुमारभत, अध्ययने निमग्न इव। क्षणान्तरे देवी कामाक्षी प्रकोष्ठे पदं न्यधात्। तस्याः प्रवेशः शर्मवर्येण न ज्ञातः।

यदा देवी भीतभीता समीपमागमत्, तदा शर्मवर्यः विचलित इव शिरः उदस्थापयत् समाधेः जागरित इव। उत्थाय देव्याः स्वागतमकरोत् च। किन्तु एषा सा मूर्तिर्नासीत्, यां सः मनसि कल्पितवान् आसीत्।

एका कालवर्णा स्थूलदेहा मध्यवयाः चञ्चला नारी तं पिबन्तीव घूर्णमानाभ्यां नयनाभ्यां पश्यन्ती आसीत्। शर्मवर्यस्य समस्तः उत्साहः, समस्तः अनुरागः शीतलो जातः। यानि मधुरस्वाद्यानि काल्पनिकानि सः बहुकालं स्वादितवानासीत्, तानि उदरे शूलानीव तोदनं प्रारभन्त। सः किमपि वक्तुं वा श्रोतुं वा नाशक्नोत्।

केवलमियदब्रवीत् "संपादकानां जीवनं सर्वथापि पशुजीवनमिवास्ति। शिरः उन्नमयितुमपि अवकाशो न लभ्यते। एतदुपरि कार्याधिक्यात् मम स्वास्थ्यमपि उपप्लुतं वर्तते। आ रात्रेः शिरोवेदनया विक्लवोऽस्मि। भवत्याः किम् आतिथ्यं कर्तव्यम्?"

कामाक्षीदेव्याः हस्ते एको महान् वस्त्रबन्धः आसीत्। तं चतुष्पद्याः उपरि क्षिप्त्वा करवस्त्रेण वदनं प्रोच्छ्य मृदुस्वरेण अवदत् "श्रीमता अतीव शोककरं वृत्तं श्रावितम्। अहं त्वेकां सुहृदं द्रष्टुं गच्छन्ती आसम्। अचिन्तयम्, मध्येमार्गं भवद्दर्शनं लब्ध्वा गच्छेयम्। किन्तु यदि भवतः स्वास्थ्यं सम्यक् नास्ति, तर्हि मया कतिचन दिनानि अत्र उषित्वा भवदारोग्यं सुधारणीयम्। अहं भवतः संपादनकार्येऽपि साहाय्यं करिष्यामि। भवत्स्वास्थ्यं समस्तनारीसमूहस्य दृष्ट्या अतिमहत्त्ववत् वस्तु। भवन्तं नाहमस्यां दशायां परित्यज्य गन्तुं शक्नोमि"।

शर्मवर्यस्य तथा प्रत्यभात् यथा तस्य रक्तप्रवाह एव स्तम्भितः, नाडी विगलिन्ती वर्तत इव। तया राक्षस्या सह वसतः जीवनमेव नरकायते। एषापि प्रवृत्ता कवितारचने। सा कवितापि कीदृशी! अश्लीलतायाः

निमग्ना । अश्लीलमप्यस्तु, सर्वथा पर्युषितं दुर्गन्धि च । सुन्दर्या युवतेः लेखनीतः आगता सा कविता कामबाणा आसीत् । अस्याः राक्षस्याः लेखनीतो निर्गता सा पङ्को वर्तते । अहं पृच्छामि, एतादृशीं कवितां रचयितुमस्याः कोऽधिकारः ? एषा कुतो वा कवितां रचयति ! कस्माद् वा क्वापि कोणे उपविश्य रामभजनं नकरोति !

असौ पृच्छति—मां परित्यज्य धावितुं शक्नोषि ! अहं तु कथयामि — कोऽपि भवत्याः समीपं कस्मादागच्छति ? दूरादेव दृष्ट्वा किं स न पलायते ? यस्याः न शिरः न पादौ, तस्याः का वा कविता ? अस्याः एतद्विषये ज्ञानं किञ्चिदपि नास्ति । किन्तु करोति कविताम् । यदि कविता अस्मिन् काये निवसेत्, तर्हि गर्दभोऽपि गायेत् । उष्ट्रोऽपि नृत्येत् । अनया रण्डया एतदपि न ज्ञातं यत् काव्य रचयितुं रूपयौवने आवश्यके न पुनः प्रतिभा इति । अस्याः स्वरूपं तु पिशाच्या इव, रात्रौ यदि कोऽपि पश्येत् नूनं भीतो भवेत् । पुनः सा लिखति उत्तेजिकां कविताम् । कोऽपि कियदपि क्षुधातुरः अस्तां नाम, किं सः गोमयं खादति ! एषा राक्षसी इयतीं महतीं पोटलिकां वहन्ती आगता । तस्यामपि स एव प्रणालस्य दुर्गन्धिः पङ्कः स्यात् ।

तदेव (पोटलिकास्थं) पुस्तकं वीक्षमाणः शर्मवर्यः अब्रवीत् " नैव नैव, अहमत्रभवत्यै क्लेशं दातुं नेच्छामि । मम अस्वास्थ्यविषयो न मुख्यः । द्वित्रदिनविश्रमेण सर्वं सम्यक् भविष्यति । भवत्याः सुहृत् भवत्परीक्षां कुर्वाणा स्यात् । "

" महाशय, भवान् संकोचमनुभवति । अहं यदि पञ्चषदिनेभ्यः अनन्तरं गच्छामि, तर्ह्यपि न कापि हानिः भविष्यति । "

" अस्य कापि आवश्यकता न वर्तते " " भवतः समक्षं भवत्प्रशंसा मुखस्तुतिरिति गण्येत, किन्तु यां सज्जनतां भवति अहं प्रत्यक्षी कृतवती, तत् वक्तुमशक्यम् । भवान् मम रचनानां प्रशंसितृषु प्रथमः । अपरथा तु अहं निराशा जाता आसम् । भवत्प्रोत्साहनस्यैव इदं शुभफलं यदहं सर्वाः एताः कविताः रचितवत्यस्मि । एतासु याः अपेक्षिताः, ताः भवता रक्ष्यन्ताम् । अहं नाटकमप्येकं रचयितुं प्रारम्भं कृतवती अस्मि । तदपि भवदवलोकनार्थं शीघ्रं प्रेषयिष्यामि । यदि भवाननुमन्यते, अधुनैव द्वित्राः कविताः श्रावयेयम् । एतादृशः अवसरः मया कदा वा लभ्यते ! इदं नाहं जानामि यत् कविताः कीदृश्यः सन्ति, किन्तु ताः श्रुत्वा भवान्

प्रसन्नो भविष्यति । सर्वथा भवता श्रुतपूर्वाः कविताः समानगुणाः सन्ति । "

सा अनुमतेः प्रतीक्षां नाकरोत् । द्राक् तां पोटलिकां समुद्घाट्य एकां कवितां श्रावयितुं प्रारभत । शर्मवर्यस्य प्रत्यभात् यथा कोऽपि तं जले निमज्य निमज्य पादरक्षया ताडयति । एकदा शिरोभ्रमणमपि आसीत् यथा पर-स्सहस्राः गर्दभाः तस्यः उपकर्णं स्थित्वा स्वस्वरमालपन्तः स्युः । वस्तुतः कामाक्ष्याः स्वरे कोकिलकण्ठवत् माधुर्यमासीत् । किन्तु शर्मवर्यस्य तदपि सम्प्रति अप्रियं भाति स्म । शिरसि सत्यमेव शिरोवेदनं समुदपद्यत । " एषा गर्दभी किं निर्गच्छति ? आहोस्वित् एवमेव उपविष्टा मम शिरः भिन्दन्ती वर्तिष्यते ? एषा मम वदनं वीक्ष्यापि मन्मनोभावनां ज्ञातुं न शक्नोति । तथापि महानुभावा कवितां कर्तुं प्रक्रान्ता । अस्याः मुखे श्रेष्ठकवयित्रीणामपि कविताः घृणामेव जनयन्ति । "

अन्ततः सः तूष्णीं स्थातुं नाशक्नोत् । अब्रवीत्— भवत्याः रचनानां विषये वक्तव्यं किमस्ति ? भवती अमुं संग्रहं इहैव निक्षिपतु । अहं कालावकाशे लब्धे पठिष्यामि । अधुना तु अत्यधिकः कार्यभारः अस्ति ।

कामाक्षी दयार्द्रा भूत्वा अकथयत् "भवान् एवं दुर्बलेऽपि स्वास्थ्ये कार्यव्यग्रो भवति। मम तु भवतः उपरि दया जायते।"

"भवत्याः कृपा"

"किं श्रीमतः श्वः अवकाशो भवेत्? मन्नाटकं श्रावयितुं मनसि इच्छा वर्तते।"

"खिद्यामि यतः श्वः मया प्रयागं प्रति गन्तव्यम्।

"तर्हि अहमपि भवता साकं प्रवत्स्यामि। प्रयाणवेलायां शकट्यामेव श्रावयिष्यामि"

"किन्तु कया शकट्या अहं प्रयास्यामि इति न निश्चितम्।"

"भवान् कदा प्रत्यागमिष्यति?"

"एतदपि न निश्चितम्"

एवमुक्त्वा शर्मवर्यः दूरभाषकोष्ठं गत्वा "हलो, ७७" इति वक्तुं प्रारभत।

कामाक्षी अर्धघण्टापर्यन्तं तत्रैव प्रतिपालनमकरोत्। किन्तु शर्मवर्यः केनापि सज्जनेन साकं महत्त्वपूर्णं सम्भाषणं करोति स्म यस्य अन्त एव न स्यात्।

निराशा भूत्वा कामाक्षी देवी तमापृच्छ्य पुनः शीघ्रमागमिष्यामीति प्रतिज्ञाय प्रातिष्ठत। ततः शर्मवर्यः दीर्घं निःश्वस्य तां पोटलिकां गृहीत्वा व्यर्थकर्गजराशौ अक्षिपत्। आत्मगतं च अकथयत् "ईश्वरः एवं मा कुर्यात् यथा तव दर्शनं पुनः स्यात्। सर्वथा लज्जाहीना, कुलटा। एषा अद्यतनं सन्तोषं सर्वं व्यनाशयत्"

पुनः व्यवस्थापकमाहूय अवदत् "कामाक्ष्याः कविता मुद्रणाय न दीयताम्"

व्यवस्थापकः स्तम्भित इव अवदत् "तत् सिद्धं यन्त्रे वर्तते"।

"कापि बाधा नास्ति, अवतार्यताम्"।

"महान् विलम्बः भविष्यति"

"भवतु नाम। सा कविता मुद्रणं न पश्यति"

---

# धिक्कारः

अनाथायाः विधवायाः मानिकायाः सद्यः जीविते किमपि अवलम्बनं नासीत्, ऋते रोदनात्। तस्याः पञ्चम एव वर्षे पिता देहमत्यजत्। माता कथमपि तामपालयत्। षोडशवर्षावस्थायामेव वीथ्याः जनानां साहाय्येन तस्याः विवाहोऽपि संपन्नः, किन्तु वर्षावधावेव माता च पतिश्च लोकान्तरं प्रति अगमताम्। अस्यां विपत्तौ तस्याः पितृव्यं वंशीधरमन्तरेण अन्यः कोऽपि आश्रयदाता न प्रत्यभात्। वंशीधरः एतावत्पर्यन्तं यथा व्यवाहरत्, तदनुसारेण सा तद्गृहे शान्त्या जीवितुं शक्नुयादिति आशा नासीत्। परन्तु सा सर्वं सोढुं सकलं कर्तुं च सिद्धा आसीत्। सा अवहेलां निन्दां ताडनं च सहिष्यते, यतः कोऽपि तस्याः शीलसन्देहं न करिष्यति, तदुपरि मिथ्यापवादं न आरोपयति, यतश्च नीचेभ्यः विटचेटादिभ्यश्च तस्याः रक्षा भविष्यति। वंशीधरस्य च मनसि कुलमर्यादायाः चिन्ता उदभूत्। मानिकायाः याचनां तिरस्कर्तुं सः नाशक्नोत्।

किन्तु द्वित्रेषु मासेषु मानिकया ज्ञातं यत् तस्मिन् गृहे तस्याः निर्वाहो दीर्घं न भविष्यति। सा गृहस्य समस्तं

कर्म करोति, इङ्गितानुसारेण नृत्यति, सर्वान् तुष्टान् कर्तुं च यत्नं करोति । तथापि कस्माद्वा तस्याः पितृव्यः तत्पत्नी च क्रुध्यतः स्मेति न ज्ञायते । मानिकायामागतमात्रायां सेविका दूरीकृता । क्षालनशोधनादिकर्मणः कृते यो भृत्य आसीत्, तस्मै जीवत एव जलाञ्जलिः दत्तः । एवं मानिकया धनव्यये न्यूनीकृतेऽपि पितृव्यौ केनापि कारणेन क्षुब्धमुखावेव अवर्तेताम् । कदाचित् पितृव्यः अवहेलयति, कदाचिन् पितृव्या निन्दति, कदाचित् मानिकायाः (पितृव्यजा) सोदरी ललितापि प्रतिविषयं तां विनिन्दति । सकले गृहे केवलं तस्याः भ्राता (पितृव्यसुतः) गोकुलः तस्यां सहानुभूतिमान् आसीत् । तस्य वचस्सु आत्मीयतायाः स्नेहस्य च कणिकाः दृश्यन्ते स्म । सः स्वमातुः स्वभावमपि ज्ञातवान् आसीत् । किन्तु यदि सः मातरं बोधयितुं प्रायतिष्यत यदि वा सर्वेषां समक्षं मानिकायाः पक्षं समर्थ्य अवदिष्यत्, तर्हि सा तस्मिन् गृहे घटिकामात्रमपि कष्टेन तिष्ठेत् । तस्मात् तस्य सहानुभूतिः मानिकायाः मनसे शान्तिप्रदाने विरमति स्म । सः वदति—सोदरि, मया उद्योगे लब्धे तव क्लेशाः दूरीभविष्यन्ति । तदा को वा भवतीं सतिरस्कारदृष्ट्या पश्येत् ! यावदहं विद्यामभ्यस्यन् वर्तिष्ये, तावदेव तव

कष्टानि दिनानि। मानिका अनेन स्नेहमयेन वचनेन पुलकिता भवति स्म। तस्याः एकैकोऽपि कणः तस्मै आशिषो वर्षति स्म।

अथ ललितायाः विवाहः। प्रातरेव अतिथीनामागमनमारब्धम्। आभरणानां झणत्कारेण गृहं शब्दमयं वर्तते। मानिकाऽपि अतिथीन् दर्शं दर्शं तुष्टा भवति। तस्याः देहे न किमपि आभूषणं विद्यते, नापि तस्यै सुन्दराणि वसनानि दत्तानि, तथापि तदीयं मुखं प्रसन्नमस्ति।

अर्धरात्रः समभूत्। विवाहस्य मुहूर्तं समुपस्थितम्। जनवासात् वस्त्राभूषणानि आगतानि। सर्वाः स्त्रियः तानि द्रष्टुमारभन्त। ललिता तानि आभर्तुमारभत। मानिकायाः हृदये विभूषितां वधूं द्रष्टुमिच्छा उदपद्यत। या ह्यः केवला बालिका आसीत्, तामद्य वधूवेषे द्रष्टुं जातामिच्छां रोद्धुं सा नाशक्नोत्। सा स्मयमाना प्रकोष्ठं प्राविशत्। सहसा तस्याः पितृव्या भर्त्सयन्ती अवदत् "त्वामत्र को वा आह्वयत्! निर्गच्छेतः।"

मानिका बृहतीः यातनाः सोढवती आसीत्, परन्तु अद्यतनी भर्त्सना तस्याः हृदयं बाण इव अविध्यत्। तस्या एव मनः तां धिक्कर्तुं प्रारभत। "तव किशोरत्वस्य

अयमेव पुरस्कारः। अत्र सौभाग्यवतीनां मध्ये तवागमनस्य का वा आवश्यकता ?"। सा गद्गदकण्ठी प्रकोष्ठात् निरगात्, रहसि च उपविश्य रोदितुं उपरि गन्तुं प्रारभत। सहसा वलभौ इन्द्रनाथः तस्याः सम्मुखीभूतः। इन्द्रनाथो गोकुलस्य सहपाठी परममित्रं चासीत्। सोऽपि विवाहाय आहूतस्सन् आगत आसीत्। अधुना गोकुलं गवेषयन् उपरि आगतः। मानिकां सः द्वित्रवारं दृष्टवान् ज्ञातवांश्च तस्या विषये तद्गृहे महान् दुर्व्यवहारः क्रियत इति। पितृव्यायाः वाचां ध्वनिः तस्यापि कर्णे पतित आसीत्। मानिकामुपरि गच्छन्तीं दृष्ट्वा सः तस्याः हृदयं परिज्ञाय तां सान्त्वयितुं पुनः उपरि अगमत्। किन्तु कोष्ठस्य द्वारमन्तः बद्धमासीत्। सः द्वारस्य रन्ध्रेण अन्तः अपश्यत्। मानिका चतुष्पद्याः सविधे स्थिता रोदिति स्म।

सः मन्दं प्रावोचत् " मानिके, द्वारमुद्घाटय।"

मानिका तस्य स्वनं श्रुत्वा कोणे निह्नुता गम्भीरेण स्वरेण अपृच्छत् " किं वा कार्यम् ?"

इन्द्रनाथः गद्गदितस्वरेण अवदत् " तव पादयोः पतामि मानिके, उद्घाटय"। एषः स्नेहमयो विनयो मानिकायाः

अननुभूतपूर्वं आसीत्। अस्मिन् निर्दये संसारे कोऽपि तां प्रति विज्ञापनं कुर्यादिति सा स्वप्नेऽपि कल्पनां न कृतवती आसीत्। कम्पमानेन हस्तेन सा द्वारमुद्घाटयत्। इन्द्रनाथो सत्वरं कोष्ठं प्रविश्य अद्राक्षीत्—छदिर्गतस्य व्यजनस्य अरात् एका रज्जुः लंबमाना अस्ति। तस्य हृदयमवेपत। सः झटिति छुरिकां निष्कास्य रज्जुं व्यकर्तयत्। अवदच्च " मानिके, त्वं किं कर्तुं प्रवृत्ता ! अपि अस्यापराधस्य दण्डं जानासि ! "

मानिका शिरो नमयित्वा अकथयत् " किं अस्मादपि दण्डात् कोऽपि दण्डः कठोरतरो भवति ! यस्याः वदनात् अपि जना जुगुप्सन्ते, तस्याः मरणार्थमपि यदि कठोरो दण्डो दीयेत, तर्हि अहं ईश्वरस्य आस्थाने न्यायस्य नामापि नास्ति " इति ब्रवीमि।

इन्द्रनाथस्य अक्षिणी सजले अभूताम्। मानिकायाः वचस्सु कियत् कठोरं सत्य भरितमासीत्। सोऽब्रवीत् " सर्वदा एतानि दिनानि न भविष्यन्ति मानिके ! यदि त्वं मदीयः अस्मिन् संसारे कोऽपि न वर्तते इति मन्यसे तर्हि तव भ्रम एषः। संसारे कनिष्ठे पक्षेऽपि एको मनुष्यस्तादृशोऽस्ति, यस्य तव प्राणाः स्वप्राणेभ्योऽपि प्रियतराः। "

सहसा गोकुलः तत्रागच्छन् अदृश्यत। मानिका प्रकोष्ठात् निरगच्छत्। इन्द्रनाथस्य वचांसि तस्याः मनसि झञ्झां समुदपादयन्निव। तस्य कः आशयः इति सा न अजानात्। तथापि स्वजीवनं सार्थकं तस्याः अभात्। तस्याः अन्धकारमये जीवने एकः प्रकाशः उदित आसीत्।

इन्द्रनाथं प्रकोष्ठे उपविष्टं, मानिकां ततो निर्गच्छन्तीं च दृष्ट्वा गोकुलः किञ्चित् शङ्कितः अभूत्। तस्य दृष्टिः परिवर्तिता। कठोरस्वरेण सः अवदत्—

"त्वं कदा अत्र आगतः!"

इन्द्रनाथः अविचलितभावः अकथयत् "त्वामेव अन्वेषयन्नत्र आगतः। त्वयि अत्र अविद्यमाने निवर्तमान आसम्। यद्यहं गतः स्याम्, तर्हि त्वं प्रकोष्ठं पिहितं पश्येः, तथा अधुना व्यजनस्य अरे एकः शवो लम्बमानो त्वया दृश्येत"

असौ स्वापराधं निह्नोतुं किमपि व्याजं दर्शयति इति गोकुलः अचिन्तयत्। तीव्रकण्ठेन अब्रवीत् "मम त्वमेवं विश्वासघातं करोषीति आशा नासीत्"

इन्द्रनाथस्य वदनं लोहितं जातम्। सः सावेशः उत्थाय अवादीत् "ममापि आशा नासीत् यत्त्वं मयि एतादृशं

तव मातापितृभ्यां किमपि संभाषणं कर्तुं न शक्नोमि। किन्तु इदं त्वयि वक्तुं न कोऽपि संकोचः यत् अहं मानिकां स्वजीवनसहचरीं विधाय आत्मानं धन्यं मंस्ये। मम कमपि इदं जीवनप्रबन्धं सम्पाद्य इमं प्रस्तावं कर्तुं युज्यत इति अचिन्तयम्। किन्तु विलम्बे कृते मानिका केवलं सर्तव्या भवेदिति अधुना भयं भवति। तस्मात् त्वां त्वद्बन्धूंश्च मुक्तचिन्तान् कर्तुमनाः अद्यैव अमुं प्रस्तावं करोमि।"

गोकुलस्य हृदये इन्द्रनाथं प्रति एतावती श्रद्धा कदापि नासीत्। तस्मिन् एवं सन्देहमकार्षम् इति सः अतीव लज्जितः अभूत्। मातृभयात् अहं मानिकायाः विषये तटस्थो भूत्वा भीरुत्वदोषस्य पात्रमस्मि इत्यपि तस्य प्रत्ययमात्। इदं शुद्धं भीरुत्वमेव, नान्यत् किञ्चित्। सः वेपमानः अवदत् "यदि अम्बा मानिकां तेन कारणेन भर्त्सितवती तर्हि तस्याः सा मूर्खतैव। अहं सन्दर्भे लब्धे तां प्रक्ष्यामि"

इन्द्रनाथोऽवदत्—इदानीं प्रच्छन्नस्य कालो व्यतीतः। त्वया मानिकायै विषयेऽस्मिन् सूचना देया इति अहं च ततो गोपनीय इति मम अपेक्षा। मानिका अस्मिन् गृहे क्षणमपि वर्ततामिति मम इच्छा नास्ति। सा अभिमान-

घना प्रकृत्या इति मया अद्य ज्ञातम्। यदि सत्यं पृच्छसि, तर्हि अहं तस्याः स्वभावेन मुग्धोऽस्मि। एतादृशी स्त्री दुर्वर्तनां न सहते"

गोकुलो भीत्वा भीत्वा अवदत् "परं तु किं त्वं जानासि—सा विधवा इति।" यदा वयं केनापि अस्माकमसाधारणं हितं जायमानं वीक्षामहे, तदा तस्य समक्षं सर्वान् आस्माकीनान् दोषान् उद्घाट्य प्रदर्शयामः। वयं दर्शयितु वाञ्छामः यद्वयं तत्कृपायाः सर्वथा योग्याः न स्मः।

इन्द्रनाथ स्मित्वा अवदत् "जानामि, श्रुतचरं तत्, अत एव च तव पित्रा सह किमपि वक्तुं मम साहसं नाभूत्। किन्तु यद्यहं विषयमिमं पुरा नाज्ञास्यम्, तदापि मम निश्चये अस्य कोऽपि प्रभावो न स्यात्। मानिका न केवलं विधवा, अपि तु अस्पृश्यापि स्यात्, ततोऽप्यधिकं किमपि गतं वृत्तं स्याच्चेत् तदपि भवतु नाम, तथापि सा मम कृते रमणीरत्नमेव। वयं किल अल्पसारेभ्यः कर्मभ्योऽपि अनुभववतो मनुष्यान् अन्विष्यामः। किन्तु यया येन वा सह जीवनयात्रा कर्तव्या, तत्र अनुभवं दोषं मन्यामहे। अहं न्यायस्य गलं मृद्नतामेको नास्मि। विपश्चेः श्रेयसी अनुभव-

दायिनी विद्याशाला अद्यावधि न जाता । या (ये वा) अस्यां विद्याशालायां लब्धयशाः तद्धस्ते वय निश्चिन्ता भूत्वा जीवनस्य भारं दातुं शक्नुमः । कस्या अपि रमण्याः विधवात्वं मम दृष्टौ दूषणं न, अपि तु गुणः " ।

सः प्रसन्नो भूत्वा पुनः अकथयत् अहं मम बन्धून् एतावत् मूर्खान् न तर्कयामि यत् ते अस्मिन् विचारे आपत्तिं विदध्युः । किन्तु यदि चेदपि ते आपत्तिकारा भवेयुः, तथापि अहं स्वादृष्टं स्वहस्ते रक्षितुमिच्छामि । मम ज्येष्ठानां मदुपरि अनेके अधिकाराः वर्तन्ते । अनेकेषु विषयेषु तदिच्छामहं वेदशासनं मन्ये । किन्तु यदहं स्वात्मविकासस्य सहाय मन्ये, तत्र केनापि कस्यापि बलात्कारं न सहे । स्वयं जीवननिर्मातृतायाः गर्वस्य आनन्दमनुभवितुं वाञ्छामि "

गोकुलः किञ्चित् शङ्कितो भूत्वा अपृच्छत् " यदि मानिका नाभ्युपगच्छेत् ?" । इन्द्रनाथस्य इयं शङ्का सर्वथा निर्मूला अभात् । सोऽवदत् "गोकुल, त्वमधुना बालकवत् भाषसे । मानिका अङ्गीकरिष्यतीति नाभ्युपगमिष्यतीति विदितमेव । सा तव गृहे प्रहारान् भर्त्सनां च सहिष्यते, निन्दनं शृणोति ; किन्तु अत्रैव वर्तिष्यते । युगेषु संजातानां संस्काराणां निरसनं न सुकरम् । किन्तु

अस्माभिः मा बोधनीया । तस्याः मनसि संचिताः संस्काराः दूरीकरणीयाः स्युः । अहं वि॰॰॰ वि॰ह॰ पक्षावलम्बी नास्मि। मम अभिप्रायोऽस्ति यथा पाति-व्रत्यस्य अलौकिकः आदर्शः संसारस्य अमूल्य रत्नम् । तस्योपरि आघातः आलोच्य विज्ञाय एव कर्तव्यः । किन्तु मालिकायाः विषये एष प्रश्नः नोत्तिष्ठते । प्रेम भक्तिर्वा नाम्ना न जायते, किन्तु व्यक्तौ । यस्य पुरुषस्य वदनमपि सा नाद्राक्षीत् तस्मिन् तस्याः प्रेम भवितु नार्हति । तत् केवलं साम्प्रदायिकं वचनम् । अस्य आडम्बरस्य, अस्य प्रदर्शनस्य चिन्ता नास्माभिः कार्या । पश्य, प्रायशः कोऽपि त्वामाह्वयत् । अहमपि गच्छामि । द्वित्रेषु दिनेषु पुनः त्वया मिलामि । संकोचेन त्वं विचारसमालोचनमग्नो वर्तसे—दिनानि प्रयान्ति इत्येवं मा भूत् । "

गोकुलः तं कण्ठे आश्लिष्य अवदत् " अहं परश्वः स्वय-मागमिष्यामि "

वरपक्षीयाः अगमन्—

अतिथयः प्रस्थिताः । रात्रौ नववादनवेळा अभूत् । विवाहानन्तरस्य निद्रा सुप्रसिद्धा खलु । गृहस्य सकलाः जनाः सन्ध्यात एव शेरते स्म । कोऽपि कटे, कोऽपि

मञ्चे कोऽपि भूमौ। यत्र येन स्थलं लब्धं, तत्र सः शेते स्म। केवला मानिका गृहस्य व्यवस्थां करोति स्म, गोकुलश्च स्वकोष्ठे उपविश्य वार्ता पठति स्म। सहसा गोकुलः आकारयत् — मानिके, एकभाजनमात्रं शीतलं जलमानय, अतीव तृषा बाध्ये।

मानिका जलभाजनं वहन्ती उपरि गता। चतुष्पद्यां तत् स्थापयित्वा निवर्तितुमारभत। तदा गोकुलः अवदत् "किञ्चित् तिष्ठ मानिके, त्वं किञ्चित् वक्तव्यासि"।

मानिका अब्रवीत् "इदानीं नावकाशोऽस्ति भ्रातः, सर्वं गृहं शयितमस्ति। क्वापि कोऽपि चोरः आयातश्चेत् स्थालीपात्रमपि नावशिष्येत।"

गोकुलोऽवदत् "आगच्छन्तु नाम, यद्यहं तव स्थाने अभविष्यं, तर्हि चोरैः मिलित्वा चौर्यं कारयेयम्। मया अद्यैव इन्द्रनाथेन मिलितव्यम्। अहं तस्मै अद्य मिलितुं दत्तवचनोऽस्मि। पश्य, संकोचं माकार्षीः, यत्प्रश्नं करोमि, तस्योत्तरं शीघ्रं देयम्। यदि विलम्बो भवेत्, तर्हि सः विक्लवः स्यात्। इन्द्रनाथः त्वयि प्रेमवान् इति जानासि ननु!"

मानिका साचीकृतवदना अवदत् "इदं वचनमेव वक्तुं त्वं मामाह्वयः किल। अहं किञ्चिदपि न जानामि।"

गोकुलस्य हृदयभारः लघुः जातः। सः स्मर्तुं प्रारभत। मानिका लज्जाभरेण पलायत।

सायङ्काले गोकुलः स्वमातरं प्रत्याह "अम्ब, इन्द्रनाथस्य गृहे अद्य कोऽपि उत्सवोऽस्ति। तस्य माता कथं वा सर्वं कार्यं भविष्यतीति व्याकुला आसीत्। अहमत्रवं, मानिकां प्रेषयिष्यामीति। तव आज्ञा भवति चेत्, मानिकां तत्र नेष्यामि। श्वः परश्वो वा सा प्रत्यागमिष्यति"

मानिका तस्मिन्नेव समये तत्रागता। गोकुलः तां कटाक्षेण अवैक्षत मानिका लज्जया स्तम्भिता। पलायितुं मार्गो नासीत्।

माता अब्रवीत् "मां किं पृच्छसि ? गा जिगमिषति चेत्, नय"

गोकुलो मानिकामवदत् "वसनानि धृत्वा सिद्धा भव, त्वया इन्द्रनाथस्य गेहं गन्तव्यम्"

"मम मनो न स्वस्थ, नाहं गमिष्यामि" मानिका आपत्तिं प्रादर्शयत्।

गोकुलस्य माता अवदत् - कुतो न यासि ? किं तत्र पर्वतः स्थापितोऽस्ति ?

बाष्पवारिणा आप्लुते भवतः स्म। नद्यां निपतितुं गच्छन्त्या इव तस्याः स्वान्तं विक्लवं भवति स्म।

शकटं यदा किञ्चित् दूरमगात्, तदा सा गोकुलमवदत् "भ्रातः, मम स्वान्तस्य अवस्था का इति वक्तुं न शक्नोमि। गृहं प्रति निवर्तय मां, तव पादौ प्रणमामि।"

गोकुलोऽवदत् "त्वमुन्मत्तासि। तत्र सर्वे त्वां प्रतिपालयन्तः सन्ति, त्वं वदसि निवर्तय इति।"

मानिका—मन्मनो वदति किमपि अनिष्टं भविता इति।

गोकुलः—मन्मनस्तु वदति त्वं राज्ञी भवितुं गच्छसीति।

मानिका—पञ्चषाणि दिनानि कुतो वा न तिष्ठसि। मानिका अस्वस्थेति तत्र कथय।

गोकुलः—उन्मत्तानां वचांसि मा वादीः।

मानिका—लोकाः किमन्यद् वदेयुः।

गोकुलः—अहं शुभकार्ये कदापि दासस्य चिन्तां न करोमि।

गोकुलः शिरो नमयित्वा अवदत् " अम्ब, सा अधुना प्रायः ततः अत्र नागमिष्यति। तत्रैव तस्याः निवासाय सौकर्यं कल्पितम्।

माता अक्षिणी विकास्य अवदत् " किं भषसि ! सा कथङ्कारं तत्र वर्तिष्यते ?

गोकुलः अवदत् " इन्द्रनाथेन सह तस्याः विवाहः अभूत् "

मन्ये, माता आकाशात् निपतिता। स्वसुतात् कीदृशं वचनं निर्गच्छतीति तस्याः संज्ञा नासीत्। कुलाङ्गारभूत, कलङ्कित्, पापजात—न ज्ञायते किं किं सा अब्रवीत्। गोकुलस्य धैर्यस्य चरमा सीमापि उल्लङ्घिता। तस्य मुखं लोहितं जातं, भ्रुवौ च बद्धे। अब्रवीत्— अम्ब, विरमय, अद्य इतोऽधिकं श्रोतुं मयि सामर्थ्यं नास्ति। यद्यहं किमपि अनुचितं कर्म अकरिष्यं, तर्हि, भवत्याः पादुकाप्रहारं लब्ध्वापि शिरः न उदनमिष्यम्। किन्तु अहं किमपि अनुचितं कर्म नाकरवम्। अस्यां दशायां यन्मम कर्तव्यमासीत्, यच्च सर्वस्य सज्जनस्य कर्तव्यं, तदेव अहमकार्षम्। त्वं मूर्खासि, समयस्य प्रगतिं त्वं न जानासि। अत एव अद्यावधि अहं धैर्येण तव भर्त्सनानि अशृणवम्। त्वं, सदुःखं ब्रवीमि

एकः सप्ताहो व्यतीतः गोकुलस्य स्थितिगत्योः वार्तां वनासीत्। इन्द्रनाथेन मोहमय्यां(Bombay) उद्योगः लब्धः। सः तत्र अगमत्। तत्र वासव्यवस्थां विधाय सः स्वमात्रे तन्त्रीवार्तां प्रेषयिष्यति, श्वश्रूः स्नुषा च मोहमयीं गमिष्यतः। वंशीधरस्य (गोकुलस्य पितुः) प्रथमं गोकुलः इन्द्रनाथस्य गृहे प्रच्छन्नः भवेत् इति संशयो जातः; परं यदा तत्र स न दृष्टः, तदा समस्ते नगरे गवेषणं प्रारभत। ये ये परिचिताः, मित्राणि, स्निग्धाः, बन्धवश्च आसन्, तेषां गृहाणि सः अगच्छत्। सर्वत्र नकारमेव उत्तरमलभत। सकलं दिनं संचार्य सायं गृहमागत्य पत्नीं क्रोधेन निन्दति स्म "इतोऽप्यधिकं पुत्रान् भर्त्सय वारि पायं पायं भर्त्सय। न जाने किं तव कदापि बुद्धिः उत्पत्स्यते न वा। सा राक्षसी गता चेत् गच्छत्विति तूष्णीं स्थिता स्याः। एको भारः शिरसः अपगतः। एकां दासीमानयामश्चेत्, कर्म प्रचलिष्यति। सा यदा नासीत्, किं गृहे सर्वे क्षुधा अम्रियन्त? विधवानां पुनर्विवाहः सर्वत्र जायमान एवास्ति, इदमसंभव वचनं न। अस्माकं सामर्थ्यं यदि स्यात् तर्हि विधवाविवाहपक्षावलम्बिनः देशात् निष्कासयेम, शापं वा दत्त्वा भस्मीकुर्याम; किन्तु नात्रास्माकं सामर्थ्यमस्ति। तथापि त्वयाहं

"यः सज्जनः हुसैनगञ्जप्रदेशे वसति, मोहमय्यामुद्योगं करोति, तस्य वधूः इदं प्रेषयत्।"

वंशीधरः प्रकोष्ठे गत्वा दीपं प्रज्वाल्य पठितुं प्रारभत। मानिकायाः पत्रं तत्। तत्र लिखितमासीत्—

"पूजनीय पितृव्य,

अभागायाः मानिकायाः प्रणामाः। भ्राता गोकुलः क्वापि गतः, अद्यावधि सः कुत्र वर्तते इति न ज्ञायते इति श्रुत्वा मम अत्यन्त दुःखं भवति। अहमेव अस्य कारणम्। अयं कलङ्कः उचितमेव मयि लग्नः। मत्कारणात् भवतामेतावान् शोको जात इति मम बहु दुःखं वर्तते। किन्तु अवश्यं भ्राता आगमिष्यतीति मम विश्वासः। अहं नववादनवेलायाः शकट्या मोहमयीं गमिष्यामि। ममापराधं क्षाम्यतु भवान्, पितृव्यां च मत्प्रणामान् प्रापयतु। भ्राता गोकुलः आशु सकुशलः आगच्छतु इति ईश्वरस्य संनिधौ मम प्रार्थना। ईश्वरस्य इच्छा भवति चेत् भ्रातुः विवाहे भवच्चरणदर्शनं लप्स्ये।"

वंशीधरः पत्रं पाटयित्वा खण्डानि अक्षिपत्। घटीमपश्यत् अष्टवादनवेला। शीघ्रं वसनानि धृत्वा मार्गे एकं शकटं भाटकेन लब्ध्वा पट्टिकाशकटनिस्थानं प्रति अगच्छत्।

अभागे ! मुखे कलङ्कं धारयन्ती मह्यं पत्रं लिखसि ! तव मृत्युः न भवति ! त्वं मम कुलस्य सर्वनाशं कृतवती । अद्यावधि गोकुलस्य इतिवृत्तं न ज्ञातम्, तवैव कारणात् सः गृहात् निष्क्रान्तः । त्वं मां पीडयितुं सज्जा तिष्ठसि । तव कृते किं गङ्गायां जलं नास्ति ! यदि त्वामेवं कुलटां लज्जाहीनां च अज्ञास्यम् तर्हि प्रथमदिवस एव तव गलं निरमृदिष्यम् । इदानीमायाति भक्तिं दर्शयितुम् । त्वादृशीनां पापिष्ठानां मरणमेव पीवरम् । पृथिव्याः भारः अल्पीभवति ।"

निस्थाने परश्शतानां जनानां समूहः मिलितः आसीत्, वंशीधरः निर्लज्जभावेन निन्दाः वर्षयति स्म । कीदृशः प्रसङ्गः इति कोऽपि नाजानात् । किन्तु मनसा सर्वे वंशीधरं धिक्कुर्वन्ति । स्म ।

मानिका शिलामूर्तिरिव तिष्ठति स्म, मन्ये तत्रैव प्रतिष्ठापिता । तस्याः समस्तः आत्माभिमानः चूर्णीभूतः । तस्याः मानसमभिलपति स्म "धरणिः विभिद्य मां गिलतु वज्रं निपत्य मम जीवित–अधमजीवितं–समापयतु" इति । एतावतां जनानां पुरस्तात् तस्याः मानखण्डनमभूत् । तस्याः अक्षिभ्यां बाष्पस्य एकः बिन्दुरपि नापतत् । हृदय एव अश्रूणि नासन् । तत्स्थाने दावानलः दन्दह्यते स्म

रया वेगेन मस्तिष्कं व्याप्नुयात् । संसारे किं वा जीवनमियत् अधमं भवेत्

श्वश्रूः आकारयत् 'वधूः अन्तरायाहि'।

शकट्यां प्रचलितायां श्वश्रूः अवदत् "एतादृशः निर्लपः मनुष्यो मया कदापि न दृष्टः । मम एतावान् क्रोधः उत्पन्नः यदहं तस्य जिह्वां छिन्द्याम् ।

मानिका शिरः न उदनमयत् । श्वश्रूः पुनरवदत् "न जाने एतेषां कदा बुद्धिरुदेष्यति, अधुना तु मरणस्य दिनानि अपि उपस्थितानि । तव सुतः पलायितः चेत् वयं किं वा कुर्याम इति तं पृच्छ । एतादृशः पापी एष चेत् नाभविष्यत्, एतादृशं वज्रं किमिति वा निपतेत् ! "

मानिका अधुनापि किमपि नावदत् । प्रायशः किमपि तत्कर्णगोचरतां न याति स्म । प्रायशः स्थिति-स्त्वज्ञानमपि तस्याः नासीत् । सा एकाग्रया दृष्ट्या वातायनं वीक्षते स्म । तस्मिन् अन्धकारे तस्याः किं भाति स्म—न जाने ।

कर्णपुरम् (Kanpur) आगतम् । इन्द्रनाथस्य माता अपृच्छत् "जाते किमपि खादसि ! किंचित् मधुराप्पूप खाद । यदावादनवेलापि व्यतीता ।"

मानिका अकथयत्—अम्ब, अधुना बुभुक्षा नास्ति। ततः खादिष्यामि।

माता न्यद्रात्। मानिकाऽप्यशेत, किन्तु पितृव्यस्य तद्वदनमक्ष्णोः पुरस्तात् नृत्यति स्म तथा तस्य वचनानि कर्णयोः स्वनन्ति स्म। अहो, अहमेतादृशी नीचा एतादृशी पतिता; मम मरणेन पृथ्व्याः भारो लघूभवति। तेन किं कथितम्! त्वं तव पित्रोः पुत्री चेत् पुनः मुखं न दर्शय इति। न दर्शयिष्यामि; यस्मिन् मुखे एतादृशः कालिमा लग्नोऽस्ति,तत् कस्मायपि दर्शयितुमिच्छापि नास्ति।

शर्वरी अन्धकारं छिन्दन्ती याति स्म। मानिका स्वपेटिकां समुद्घाट्य स्वीयानि आभूषणानि तस्यां न्यधात्। ततः इन्द्रनाथस्य चित्रं दीर्घकालं पश्यन्ती आसीत्। तस्याः अक्ष्णोः अभिमानस्य प्रकाशः अदृश्यत। सा चित्रं निक्षिप्य आत्मगतमभाषत "नहि नहि. अहं तव जीवितं कलङ्कितं न करिष्यामि। त्वं देवतुल्योऽसि, त्वया मयि दया दर्शिता। अहं मम पूर्वतनसंस्काराणां प्रायश्चित्तं कुर्वाणा आसम्। त्वं मामुत्थाप्य हृदये न्यधाः, किन्तु अहं त्वां कलङ्कितं न करिष्यामि। तव मयि प्रेमास्ति। त्वं मम कृते अनादरं, अपमानं, निन्दां च सहिष्यसे! किन्त्वहं तव जीवनस्य भारो न भविष्यामि।"

शकटी अन्धकारं भिन्दन्ती याति स्म। मानी आकाशे न्यस्तदृष्टिः दीर्घं स्थिता। सर्वाः तारा अदृश्या अभवन्। तस्मिन् अन्धकारे सा स्वमातुः स्वरूपमद्राक्षीत्। एतावदुज्ज्वलं तत्प्रत्यक्षीभूतं यत् सा विचलिता अक्षिणी न्यमीलयत्। पुनः यदा सा कोष्ठस्यान्तः अपश्यत्, तदा श्वश्रूः निद्राति स्म।

कियती रात्रिः व्यतीता–न जाने। द्वारोद्घाटनध्वनिना इन्द्रनाथस्य मातुः नेत्रे उन्मीलिते अभूताम्। शकटी वेगेन चलन्ती याति स्म; परन्तु वधूः न दृश्यते स्म। सा अक्षिणी मृदित्वा उत्थिता आकारयत्–वधुके। वधुके!! किमपि उत्तरं न लब्धम्।

तस्याः हृदयं धक् धक् इति कम्पितुमारभत। उपरितनशयनं प्रति दृष्टिं प्रैषयत् विसर्जनकोष्ठे अपश्यत्, आसनानामधस्तादद्राक्षीत। वधूः क्वापि नासीत्। तदा सा उपद्वारं स्थिता। वध्वाः किं जातम्? इदं द्वारं कः उदघाटयत्? कोऽपि शकट्यां नायातः। तस्याः स्वान्तं शङ्काव्याकुलमभूत्। सा द्वारं पिधाय उच्चैः रोदितुमारभत। कः प्रष्टव्यः? इयं पत्रशकटी (Mail) कियता कालेन विरमति! सा कथितवत्यासीत् वधुके, सपुरुषे कोष्ठे उपविशाव। वधूः तत्कथितं नान्वमन्यत।

साकथयत्—अम्ब भवत्याः शयने क्लेशः भविष्यति । इदं किल सौख्यं कल्पयित्वा गता ।

सहसा सा अपायरज्ज्वाः असरत् । सा सर्वशक्त्या वारं वारं रज्जुं समाकर्षत् । केषुचिन्निमेषेषु शकटी विरता । रक्षी (Guard) आगतः । प्रतिवेशकोष्ठेभ्यः द्वित्राः पुरुषा अपि आगताः । पुनः जनाः समस्तं कोष्ठमन्वैषन्त । अधःफलकं सावधानमपश्यन् । रक्तस्य किमपि चिह्नं नासीत् । पदार्थानां परिवीक्षा कृता । संस्तरा· पेटिका, संपुटः, भाजनानि इति, सर्वे यथावत् आसीत् । सर्वेषां मुद्रा अपि बद्धा आसन् । किमपि वस्तु अदृश्यं नासीत् । यदि कोऽपि बहिस्तः आयातः, तर्हि चलन्त्याः शकट्याः क गच्छेत् ? एकां स्त्रियं धृत्वा शकट्याः अवकूर्दनमसम्भवम् । सर्वे जनाः एतैः लक्षणैः "मानिका द्वारमुद्घाट्य बहिः वीक्षितुं गता स्यात्, मुष्टिग्रहे हस्तपरिस्खलनात् निपतिता स्यात्" इति निर्णयमकुर्वन् । रक्षी सज्जन आसीत् । सः शकट्याः अवतीर्य एकक्रोशपर्यन्तं मार्गस्य द्वयोरपि पार्श्वयोः गवेषणमकरोत् । मानिकायाः किमपि चिह्नं न लब्धम् । रात्रौ ततोऽधिकं किं वा कर्तुं शक्येत ? केचित् इन्द्रनाथस्य मातरं साग्रहं सपुरुषकोष्ठमनैषुः । माता पुरस्तननिस्थाने अवतीर्य

वर्तता, प्रातः इतस्ततश्च दूरं परिवीक्षा क्रियताम् इति निश्चितम्। विपत्तौ मानवः परमुखापेक्षी भवति। माता कदाचिदस्य मुखं पश्यति, कदाचिदस्य। मन्ये तस्याः अक्षिणी याचनापूर्णे सर्वान् कथयतः स—कोऽपि मम वत्सां कुतो न गवेषयति ! हा ! वराक्याः विवाह-वसनमपि न मलिनं जातम्। कियतीः आशाः प्रार्थनाश्च भृत्वा पत्युः समीपं याति स ! कोऽपि तस्य दुष्टस्य वंशीधरस्य सविधे गत्वा कुतो न कथयति " तव मनोभिलाषः पूर्णः, यत्त्वमपेक्षथाः तद् सफलं जातम्। किमद्यापि तवोरः न भरितम् ! "

वृद्धा उपविष्टा रोदिति स्म; शकटी अन्धकारं छिन्दन्ती याति स्म।

भानुवारस्य दिवसः सन्ध्यासमये इन्द्रनाथः द्वित्रैः मित्रैः साकं स्वगृहस्य छदौ उपविष्ट आसीत्। परस्परं परिहासः प्रावर्तत। मानिकायाः आगमनं परिहासस्य विरमआसीन्।

एकं मित्रमवदत् — भोः इन्द्र, त्वं वैवाहिकं जीवनं किञ्चित् अनुभूतवान्। असम्यं का सूचनां दत्से ? क्वापि वयं नीडमारचयेन अथवा शाखासु उपविष्टा एव कालं नयेम ! पत्रिकाः धीशाम्दे चेत् नरकवैवाहिकजीवनयोः अधिकमन्तरं नास्तीति भाति।

इन्द्रनाथः स्मित्वा अवदत्—इदं तु दैवस्य क्रीडा । भ्रातः, षोडशभिरपि कलाभिः दैवस्य क्रीडा । एकस्यां दशायां वैवाहिकजीवनं नरकतुल्यं चेत् अन्यस्यां दशायां स्वर्गात् हीनं न भवति ।

द्वितीयं मित्रमवदत् "एतावती स्वतन्त्रता तु न भविष्यतीति खलु" ।

इन्द्रनाथः अब्रवीत् एतावती किम्, अस्याः शतांशोऽपि न भवति । यदि त्वं प्रत्यहं चलचित्रं दृष्ट्वा निशीथे गृहमाजिगमिषसि चेत् नववादनपर्यन्तं शयित्वा उत्तिष्ठासि चेत्, कार्यालयात् चतुर्घण्टावेलायामागत्य पत्रीः (Cards) क्रीडितुं वाञ्छसि चेत्, तर्हि तव विवाहेन किमपि सुखं न भवति । अपि च प्रतिमासं यत् वसनयुग्मं (Suit) कारयसि, तत्प्रायशः वर्षे एकदापि कारयितुं न शक्यः"

"त्वत्स्त्री तु अद्य रात्रिशकट्या आगमिष्यति !"

"आम्, पत्रशकट्या । मया सह गत्वा तस्याः स्वागतं करोषि ननु !"

"इदं महत्त्वं वा ! इदानीं को वा गृहं याति, परन्तु भोः सखि: क्षन्तव्या ।"

सहसा आगतः तन्त्रीचारः इन्द्रनाथस्य हस्ते तन्त्री-पत्रकोशं न्यधात्।

इन्द्रनाथस्य मुखं विकसितमभूत्। झटिति कोशं समुद्घाट्य पठितुमारमत। एकवारं पठनेन तस्य हृदय-माहतमिव, श्वासः निरुद्ध इव अभूत्, शिरः भ्रमितु-मारमत। अक्ष्णोः कान्तिः लुप्ता यथा विश्वस्योपरि असिता जवनिका पतिता स्यात्। सः तन्त्रीवार्तां मित्रस्य पुरः अक्षिपत्; हस्ताभ्यां मुखं समावृत्य सगद्गद रोदितुं प्रारभत। द्वौ अपि सुहृदौ विक्लवीभूय तन्त्री-वार्तां गृहीत्वा तत्पठनेन नष्टबुद्धी इव भित्तिमवालोकय-ताम्। किमालोचित, किं च आपतितम्।

तन्त्रीपत्रे लिखितमासीत्— मानिका शकट्याः, कूर्दित्वा पतिता। तस्याः शवः लालपुरात् क्रोशत्रयदूरे लब्धः। अहं लालपुरे अस्मि। शीघ्रमायाहि। एकं मित्रमकथ-यत्—कोऽपि शत्रुः मिथ्यावार्तां प्रेषितवान् न स्यात्! द्वितीयं मित्रमकथयत्— आम् कदाचित् दुर्जनाः एवं दुश्चेष्टां कुर्वन्ति।

इन्द्रनाथः शून्याभ्यां नेत्राभ्यां तावपश्यत्, परं मुखेन किमपि नावदत्। कांश्चित् निमेषान् त्रयोऽपि ते निर्वाचः निस्पन्दाः उपविष्टाः। सहसा इन्द्रनाथः उत्थाय अब्रवीत् अहं सांप्रतिक्या शकट्या गच्छामि।

मोहमयीतः नववादनवेलायां शवटी प्रतिष्ठते स्म। द्वावपि सुहृदौ झटिति शय्यादि बध्वा सिद्धमकुर्वन्। एकः शय्यामवहत्, द्वितीयः पेटिकाम्। इन्द्रनाथः आशु वसनं धृत्वा निस्स्थानं प्रति प्रचलितः। निराशा पुरः आसीन्, आशा रुदन्ती पश्चात्।

एकः सप्ताहो व्यतीतः। वंशीधरः कार्यालयादागत्य उपद्वारमुपविष्ट आसीत् यदा तदा इन्द्रनाथः आगत्य प्राणमत्। वंशीधरः तं दृष्ट्वा चकितः अभूत्; न तस्य अनपेक्षितेन आगमनेन, अपि तु तस्य विकृतदशया; मन्ये वीतरागः शोक एव पुरस्तात् स्थितः, मन्ये कस्मादपि हृदयात् निर्गतः मूर्तिमान् निःश्वासः। वंशीधरः अपृच्छन् त्व मोहमयीं गतः किलासीः ! इन्द्रनाथः उत्तरमदात् सत्यं भोः, अद्यैव ततः प्रत्यागतः। वंशीधरः तिक्त-स्वरेणावदत् — गोकुलं तु त्वं नीतवान्। इन्द्रनाथः स्मीममङ्गुलीयकं पदयन्नवदत्-स मम गृहेऽस्ति। वंशीधरस्य उदासीने मुखे हर्षस्य प्रकाशः प्रसृतः। अवदत् तर्हि अत्र कुतः नायातः ! त्वया स कुत्र दृष्टः !, किं स मोहमयीमागत आसीत् !

"नैव भोः, सः शकटीतः अवतरति मयि निस्स्थाने मिलितः"

"तर्हि गत्वा तमानय, यत्कृतं तदुचितमेव कृतम्" एवं वदन् सः गृहान्तः अधावत्। एकस्मिन् क्षणे गोकुलस्य माता इन्द्रनाथं अन्तराकारयत्। तस्मिन्नन्तः प्रविष्टे माता तं आपादचूडं वीक्ष्य अपृच्छत्—वत्स, किं रुग्ण आसीः ! कुतो वा तव वदनं विकान्ति दृश्यते !

इन्द्रनाथः किमपि उत्तरं नादात्।

गोकुलस्य माता जलपात्रं निधाय अकथयत्—पाणिपादं क्षालय वत्स, गोकुलः सम्यगस्ति किल ! इयन्ति दिनानि क अवसन् ! अहं तु परश्शताः प्रार्थनाः कृतवती। सः कुतो वा नागतः !

वराकीं निन्दसि । किन्तु एतावता शीघ्रेण मोहमयीतः कस्मात् प्रत्यागतः !

इन्द्रनाथः स्मयमानोऽब्रवीत् — किं कुर्याम् ! मातुः तन्त्रीवार्तां मोहमय्यां लब्धा यथा मानिका शकटीतः कूर्दित्वा प्राणानत्यजदिति । सा लालपुरे निपतिता आसीत् । धावन् आगतः । तत्रैव दाहक्रियामकार्षम् । अथ गृहमागतः ! इदानीं मम अपराधं क्षाम्यन्तु भवन्तः ।

सः ततः किमपि वक्तुं नाशक्नोत् । अश्रुवेगः कण्ठमबध्नात् । वसनकोशात् पत्रमेकं निष्कास्य मातुः पुरस्तात् निधाय अब्रवीत्—तस्याः पेटिकायां पत्रमिदं लब्धम् । गोकुलस्य माता कांश्चित् निमेषान् मर्माहतेव उपविष्टा भूमिमवलोकयन्ती आसीत् । शोकः, ततोऽधिकं पश्चात्तापश्च तस्याः शिरः अनमयताम् । ततः पत्रं गृहीत्वा पठितुमारभत ।

स्वामिन्, यावदिदं पत्रं भवद्धस्तं प्राप्स्यति, तावदहं संसारात् मुक्ता भविष्यामि । अहं सर्वथा अभागिनी अस्मि । मम कृते अस्मिन् संसारे स्थानं नास्ति । भवतापि मत्कारणात् क्लेशः निन्दा च प्राप्यते । अहमालोच्य निश्चयमकरवम्—मम मरणमेव वरम् ।

मयि भवता या दया कृता, तस्यै अहं किं वा प्रतिदद्याम्! जीवने अहं कदापि कस्या अपि वस्तुने नास्पृहयम्। किन्तु भवतः चरणयोः शिरः निधाय मर्तुं न अशक्नम् इति मम दुःखमस्ति। मदर्थे भवता शोकः न कर्तव्य इति मम अन्तिमा याचना। ईश्वरः भवन्तं सदा सुखिनं रक्षतु।

माता पत्रं न्यदधात्, तस्याः अक्षिभ्यामश्रूणि निर्गतानि। प्रघाणे वंशीधरः निस्पन्दः स्थितः। मानिका तत्पुरतः लज्जानना स्थितेव अभात्।

---

# निष्कारणं यशः

तेषु दिनेषु संयोगवशात् मण्डलाधिकारी रसिकः सज्जनश्च एकः अभूत् । इतिहासे पुरातननाणकानां गवेषणे च सः लब्धख्यातिः आसीत् । कार्यालयस्य शुष्ककर्मणां मध्ये तस्य ऐतिहासिकवीक्षापरीक्षादीनां कृते कथं समयो लभ्यते स्मेति ईश्वर एव जानीयात् । कदापि कमपि अधिकारिणं पृच्छत, स वदति 'कर्मभारेण म्रियमाणोऽस्मि, शिरः उन्नमयितुमपि अवकाशो न लभ्यते'। प्रायशः मृगया, प्रवासः इत्यादिकं च तेषां कर्मसु अन्तर्भूतम् । तस्य सज्जनस्य (मण्डलाधिकारिणः) कृती· अहं दृष्टवान् ,मन्मनसि च तं प्रति आदरः आसीत् । किन्तु कस्यापि घनिष्ठस्य सम्बन्धस्य तस्य अधिकारो बाधक आसीत् । मम एषः संकोच· आसीत्—यदि मम दिशातः (संबन्धघटनाय) प्रयत्नः स्यात् तर्हि जनाः अत्र मम स्वार्थः कोऽपि वर्तत इति वदिष्यन्ति; अहं कस्यामपि दशायामेतादृशमपवादं शिरसा धारयितुं नेच्छामि । अहं भोजनकूटेषु सार्वजनिकोत्सवेषु च सर्वकाराधिकारिणाम् आमन्त्रणस्यापि विरोधी अस्मि । कोऽपि अधिकारी

कस्यापि साधारणोत्सवस्य सभापतिः कृत इति वा, कापि शाला, कोऽपि औषधालयो विधवाश्रमो वा कस्यापि राज्यपालस्य नाम्ना उद्घाटित इति वा यदा शृणोमि, तदा मदीयदेशबन्धूनां दासमनोवृत्तिविषये चिरं शोचामि। किन्तु यदा एकस्मिन् दिने मण्डलाधिकारी स्वयं मम नाम्नि सन्देशं प्रैषयत् यथा " अहं भवता सह मिलितुकामोऽस्मि। किं मम भवनं प्रति आगमनस्य श्रमं भवान् स्वीकुर्यात् ? " इति, तदाहं महति द्वैधे न्यपतम्। किं वा उत्तरं दद्याम् ? द्वित्राणां मित्राणामभिप्रायमपृच्छम्। तेऽवदन् " स्पष्टं लिखतु भवान् — मम अवकाशो नास्ती "ति। स मण्डलाधिकारी चेद् अस्तु स्वगेहे। किमपि सार्वकारिकं न्यायालयीयं वा कर्म यदि स्यात् तर्हि भवद्गमनमनिवार्यं स्यात्। किन्तु निजसन्दर्शनाय गमनं भवद्गौरवविरुद्धम्। अन्ततः स एव भवद्गृहं प्रति कुतो नायातः ? किमेतेन तन्महत्तायाः हानिः स्यात् ? अहं मण्डलाधिकारी अस्मि इति कारणेनैव स्वयं नायातः। एतेषां दुरहंकारिणां भारतीयानां कदा वा ' कार्यालयाद् बहिः वयमपि अन्ये इव साधारणाः मनुष्याः ' इति ज्ञानमुत्पद्येत ? प्रायशः एते स्वगृहिणीष्वपि अधिकारं प्रचालयन्ति। स्वाधिकारपदं तैः कदापि न विस्मर्यते।"

एकः सुहृत् , यः किल संचलद्विश्वकोश एव, अधि- कारिणां विषये अनेकाः अतीव मनोरञ्जिकाः घटनाः अश्रावयत् । एकः अधिकारी श्वशुरालयं जगाम । प्रायशः पत्नीं ततः आनेतुम् । यथा सार्वत्रिको व्यवहारः, तथा श्वशुरः प्रथमसूचनामात्रेण प्रेषणमुचितं नामन्यत । सः वक्तुमुपाक्रमत—वत्स, एषा इयतां दिनानामनन्तरमागता । अधुनैव कथं प्रेषयेयम् ! षण्मासान् अत्र भवितुं तामनुजानीहि । इतः अधिकारिणः भार्यापि सेविकया सन्देशं प्रैषयत सम्प्रत्येव न गन्तुं वाञ्छामि । अन्ततो मातापितृभ्यां साकमपि मम कोऽपि सम्बन्धः अस्ति । न खल्वहं त्वया क्रीतास्मि !"

अधिकारी जामाता कुपितोऽभूत् । द्राक् अश्वमारुह्य स्वनगरं प्रति प्राचलत् । परेद्युरेव श्वशुराय न्यायपत्रं (Summons) प्रैषयत् । वराकः वृद्धः शीघ्रं सुतां सह नीत्वा जामातुः सेवायामुपस्थितः । तदा तस्य जीवितं रक्षितम् ।

एतेऽधिकारिणः एवं मिथ्याभिमानशालिनो भवन्ति । अपि च मण्डलाधिकारिणः सकाशात् भवता प्राप्तव्यं किं वर्तते ! यदि भवान् राजविद्रोहात्मकं जल्पं वा लेखं वा लिखसि, तर्हि अह्नाय निगृहीतो भविष्यसि ।

मण्डलाधिकारी तदा किमपि दाक्षिण्यं नावलम्बिष्यते। वदिष्यति—इयं सर्वकारीया आज्ञा। अहं किं वा कुर्याम्! भवत्पुत्रार्थं शासनपतेः उपमण्डलाधिकारिणो वा पदं त्वं नाकाङ्क्षसे। व्यर्थमेव कुतो वा तत्र धावसि!

किन्तु मित्राणामयमुपदेशः मह्यं नारोचत। मण्डलाधिकारिणा प्रेषितमिति एतावन्मात्रेण कारणेन सत्पुरुषेण एकेन प्रेषितस्य आमन्त्रणस्य अस्वीकारः मुखभङ्गः स्यात्। यदि मण्डलाधिकारी स्वयं मम गृहमागमिष्यत्, तर्हि तस्य गौरवं न सर्वथा क्षीणमभविष्यत्। उदारहृदयो नरः निर्बाधं समागच्छेत्। अस्तु, किन्तु मण्डलस्य अधिकारो नाम महदिदं पदम्। अपि च एकस्य उपन्यासकारस्य व्यक्तित्वमपि किम्? आंग्लदेशे अमेरिकादेशे वा अस्यलेखकस्य उपन्यासकारस्य वा पंक्तौ भोक्तुं निमन्त्रणं प्रधानमंत्री अपि गौरवकारणं मन्यते, का गणना मण्डलाधिकारिणः! परन्तु इदं भारतवर्षं, यत्र एकैकस्यापि धनिकस्य आस्थाने कविसमाजा सार्धमेक धनिकस्य कीर्तिं गातुं मिलितं तिष्ठति स्म। यत्र च अद्यापि अस्माकं लेखकानां वृन्दानि विनैव आह्वान राज्ञां सेवायै उपस्थिताः भवन्ति, स्तुतिपद्यानि प्रस्तुवन्ति,

बहुमानाय हस्तं प्रसारयन्ति। त्वं च तावन्महान् नासीः यत् मण्डलाधिकारी तव गृहमागच्छेत्। यदि त्वयि एतावान् दुरभिमानः एतावती क्षणिकचित्तता चास्ति, तर्हि सोऽपि मण्डलस्य चक्रवर्ती अस्ति। यदि तस्य किञ्चित् अभिमानमपि स्यात्, तर्हि उचितमेव। तत् तस्य दौर्बल्यमिति वा, अशिष्टतेति वा, मूर्खत्वमिति वा संप्रदायजडतेति वा कथय, तथापि तत् उचितमेव। देवतात्वं गर्वस्य कारणम् किन्तु मानवत्वमपि न किल अपराधः।

अपि चाहं कथयामि — मण्डलाधिकारी त्वद्गृहं नागत इति भगवते धन्यवादान् देहि; अन्यथा तव कियदवमानं स्यात्। तस्य आदरसत्कारयोः कृते तव सविधे को वा पदार्थः अस्ति ! सम्मानार्हा एका आसन्दी अपि नास्ति ! किं तं त्रिपादसिंहासने उपवेशयसि ! आहोस्वित् मलिने आस्तरणे ! पैसात्रयमूल्यकाः चतुर्विंशतिधूम्रवर्तिकाः निपीय स्वमनः सन्तोषयसि। यासां मूल्यं द्वयोः रूप्यकमेकं भवति, ताः सिगार् नाम्नीः वर्तीः क्रेतुं किं सामर्थ्यमस्ति ! ताः वर्तयः क्व लभ्यन्ते इत्यपि न जानासि, तासां किं नामधेयमित्यपि। अधिकारी-महाभागः स्वयमेव अनागत्य त्वामेव आह्वयदित्येतत् तव

मार्ग्य मन्यस्व। पञ्चपाणि रूप्यकाणि व्ययीभवेयुः, लज्जितेनापि भवता भवितव्य स्यात्। अपि च यदि तव परमदौर्भाग्यस्य पापानां च दण्डस्वरूपेण तद्धर्मपत्नी अपि तेन सह अमविष्यत, तर्हि तव भूमौ विलय नादन्यत् शरणं न स्यात्। भवान् वा भवत्पत्नी वा किं तस्याः महिलायाः सत्कारं कर्तुं शक्नुयात्! तव उच्छ्वासनिश्वासावपि निरुध्येयाताम्, त्वं मूर्छितः अपि स्याः। सा त्वया निर्गनरीत्यापि अलङ्कृते संदर्शनकोष्ठे न विरमेत्। तत्र कोष्ठे तव दारिद्र्यं वर्तत एव, परं न अव्यवस्था। अन्तः तु पदे पदे अव्यवस्थायाः दृश्यानि गोचरीभवेयुः। त्वं स्वगृहे चर्पटानि धृत्वा विपन्नतायां मग्नो भूत्वा जीवनं यापयसि। किन्तु कोऽपि आत्माभिमानी पुरुषः स्वस्य दुरवस्था अन्येषां विनोद-विषयो भवतु इति न किल वाञ्छति। अस्याः महाशयायाः पुरस्तात् तव जिह्वा सन्ना स्यात्।

एवं चाहं मण्डलाधिकारिणः आमन्त्रणं स्व्यकरवम्। यद्यपि तस्य स्वभावे किंचिद् अनावश्यापिकारिकी प्रतिष्ठा आसीत्, किन्तु तस्य स्नेहः उदारता च तस्याः प्रकटनाय अवकाशं न प्रादाताम्। कनिष्ठे पदे सः मद्यमासेरम्य

अवकाशं न प्रादात् । आधिकारिक्याः प्रकृतेः परिवर्तनं तस्य शक्तेः बहिः आसीत् ।

अहं तु अस्य प्रसन्नस्य किमपि महत्त्वं न अगणयम् । महत्त्वगणनायाः किमपि कारणं नासीत् । स मामाहृयत् , अहं च अगच्छम् । किञ्चित् संभाष्य प्रत्यागच्छम् । केनापि साकं तस्य कथनस्य आवश्यकता का ? वद्धि शाकक्रयणाय विपणिगमनमिव ।

किन्तु न जाने सज्ञाः कथं रहस्यं ज्ञातवन्तः । मण्डलाधिकारिणः मयि गहना मैत्री वर्तते, सः मम अतीव सम्मानं कुरुते इति समुदायविशेषेषु चर्चा भवितुं प्रारभत । अतिशयोक्तिः मम सम्मानं पुनरपि अवर्धयत । एतावती प्रसिद्धिः जाता यत् मम समादेशं विना सः कमपि निर्णयं प्रणिगदनं वा न लिखति ।

चतुरः कोऽपि मनुष्यः अनया ख्यात्या लाभं समपादयिष्यत् । स्वार्थाय खलु नरो विवशो भवति । तृणस्यापि अवलम्बनं गवेषमाणो भ्रमति । एतादृशेषु जनेषु मद्द्वारेण तेषां कर्म शक्यं भवति इति विश्वासस्य उत्पादनं किमपि कष्टं नासीत् । किन्तु एतादृशेषु विषयेषु मम जुगुप्सा भवति । परदशाताः व्यक्तयः स्वकथाभिः

सह मत्सविधे आगताः । कस्मिन्नपि राज्यभटैः दौर्जन्यं दर्शितमासीत् । कोऽपि आयकराधिकारिणां पीडया दुःखित आसीत् । कस्यापि कार्यालये तद्विषये अन्यायः क्रियत इति, तत्पश्चाद्भवानां तु झटिति झटिति उन्नतिः क्रियत इति च आक्षेपः आसीत्। तस्य वारमागतं चेत् कोऽपि नावधानं ददाति । एतादृशः यः कश्चित् प्रसङ्गः प्रत्यहमपि मम समक्षमागतः । किन्तु तेषां सर्वेषामपि मदीयमेकमेव उत्तरमासीत् — ममात्र कोऽपि सम्बन्धो नास्ति ।

एकदा मयि मदीये कोष्ठे उपविष्टे सति मम बाल्यस्य एकः सतीर्थ्यः सुहृत् सहसा आयातः । आवां द्वावपि एकस्यामेव शालायां पठितुमगच्छाव । मार्कि ४५ वर्षैः पुरातनो विषयः । सम्प्रति मम वयः ४०. वर्षेभ्यः अधिकं न, सोपि प्रायः तावद्वया एव भवेत् । किन्तु मत्तः अतीव बलवान् पुष्टगात्रश्च । अहं चतुरः आसम्, स तु नितरां मन्दधीः । गुरुमहाभागः तेन निर्विण्णः सन् तत्पाठनस्य भारं मम स्कन्धे आरोपयत् । यः शरीरप्रमाणेन मम द्विगुणः आसीत्, तत्पाठनं गौरवास्पदमहं मन्ये स्म, तं च श्रद्धया पाठयामि स्म । गुरुवर्यस्य वेत्रं यत्र असफलमासीत् तत्र मम प्रेम सफलमभूत् इति तस्य

फलमभूत् । बलदेवः प्राचलत्, अन्तिमपरीक्षापर्यन्तं च आसादयत्, किन्तु एतन्मध्ये गुरुवर्यस्य स्वर्गप्रयाणेन शाला विघटिता । तस्य छात्राश्च इतस्ततो विकीर्णा अभवन् । ततः अहं बलदेवं केवलं द्वित्रवारं मार्गे अपश्यम् । (अहमिदानीमपि स एव शुष्कशरीरमल्लः अस्मि, स तु तादृगेव भीमकायः), नमस्करणानन्तरं क्षेमं पृष्ट्वा स्वं स्वं मार्गमवलम्ब्य अगामाव ।

अहं तस्य हस्तलाघवं दृष्ट्वा अब्रवम्—आयाहि भ्रातः बलदेव, अपि सुखी असि ? कथमहं स्मृतः ? अधुना च किं कुर्वाणोऽसि ?

बलदेवः व्यथितकण्ठेन अवदत्—जीवितस्य दिनानि पूरयन्नसि, अन्यत् किम् ? त्वया मिलनस्य आ बहोः कालात् इच्छा आसीत् । स्मर तस्याः शालायाः, यदा त्वं मां पाठयसि स्म । तव कारणेन कतिपयानि अक्षराणि अपठम्, सम्प्रति च मम भूस्वाम्यस्य कर्माणि निर्वाहयामि, अन्यथा तु मूर्ख एवाहममविष्यम् । त्वं मम गुरुरसि भ्रातः, सत्यं ब्रवीमि । मादृशस्य गर्दभस्य अध्यापनं तवैव शक्यं कर्म । गुरुवर्यात् पाठमधीत्य स्वस्थानं प्राप्त एव मयि सर्वं विस्मर्यते स्म, न जाने कुतः,

त्वं तु यत् अपाठयः, तत यत्नं विनैव स्मृतं भवति स्म ।
त्वं तदापि अतीव निशितमतिः आसीः ।

एवमुक्त्वा स मां साभिमानाभ्यां नेत्राभ्यामद्राक्षीत् ।

अहं बाल्यस्नेहितान् दृष्ट्वा आनन्दनिर्भरो भवामि । सजलनेत्रो भूत्वा अब्रवम्—अहं तु यदा त्वां पश्यामि, तदा इच्छा भवति त्वां कण्ठे समालिङ्गितुम् । ४५ वर्षाणामन्तरं मन्ये अगोचरी भवति सर्वथा । सा पाठशाला अक्ष्णोः पुरस्तात् नर्तितुं प्रारभते, बाल्यं च सर्वाभिः मनोहरताभिः सार्धं नवीनं समुत्पद्यते ।

बलदेवोऽपि द्रुतकण्ठेन उत्तरं प्रादात् भ्रातः, अहं तु त्वां सदैव मम इष्टदेवं मन्यमानोऽस्मि । यदा त्वां पश्यामि, तदा एष मम बाल्यसुहृदस्ति यो नैव सङ्कटस्य समये वञ्चयते इति मम वक्षः व्यामविशालं भवति । तव वृद्धिं श्रावं श्रावं मनोभरं प्रसन्नो भवामि । किन्तु इदं ब्रूहि – किं त्वया भोज्यं न लभ्यते? कुतः किञ्चित् पानखादनादि न कुरुषे? शुष्कः कुतो जायसे? यदि घृतं दुर्लभं, तर्हि द्वित्राणि घृतपत्राणि प्रेषयिष्यामि । अधुना त्वमपि वृद्धो जातः, सम्यक् आकण्ठं भुङ्क्ष्व । अधुना देहे यत्किञ्चित् बलं तेजो वा अस्ति, तत् केवल-

भोजनाधीनम् । अहं त्वधापि प्रस्थमात्रं दुग्धं, तत्पादमात्रं घृतं च निश्शेषीकरोमि ! अचिरात् किञ्चित् नवनीतमपि खादितुमारब्धवान् । सर्वं जीवनं पुत्रपौत्रादीनां कृते श्रमितम् ; अधुना तु कश्चिदपि अनामयमपि न पृच्छति । यद्यद्य रुग्णः शयिष्ये, कोऽपि पानीयमपि न दद्यात् । तस्मात् प्रकामं खादामि, सर्वेभ्यः अधिकं च कर्म करोमि । गृहे ममैव शासनं चलति । किन्तु मदीयः योऽसौ ज्येष्ठः पुत्रोऽस्ति, तस्योपरि भटाः मिथ्यारोपं कृतवन्तः । यौवनमदे कोऽपि किमपि न जानाति । अस्त्यपि मल्ल-तल्लजः सः । भटाधिकारिणा एकदा तस्य वाग्विवादः अभूत् । तदा प्रभृत्येव ते सलब्धा आसन् । अत्र ग्रामे क्वापि स्तेयमभवत् । भटाधिकारी परिवीक्षायां तमपि न्यग्राहयत् । अद्यावधि सप्ताहं सः कारागारे वर्तते । व्यवहृतिः खलीलस्य न्यायालये वर्तते । भटाधिकारिणः खलीलस्य च करटकदमनकयोः इव मैत्री वर्तते । अवश्यं कारावासदण्डो भविता । अधुना यदि त्वं रक्षसि चेत्, तर्हि तस्य प्राणाः रक्षिता भवन्ति । अन्या कापि आशा नास्ति । कारागृहवासो यद्यस्ति सदस्त्येव, तेन सह गौरवमपि भस्मसात् भवति । त्वं गत्वा मण्डलाधिकारिणं ब्रूहि—अयमारोपो मिथ्या, स्वयं गत्वा परिवीक्षितो भवान्

इति। अलम्, पश्य भ्रातः, बाल्यमित्रमसि, नकारं मा स कथय। जानामि, त्वं नैतादृशेषु विषयेषु प्रविशसि, न च त्वादृशैः प्रवेष्टव्यम्। त्वं प्रजार्थं संग्रामं कुर्वाणो जीवोऽसि, तव सर्वकारीयैः जनैः मेलनस्य वर्धनं नोचितम्। अपरथा हि त्वं जनतायाः दृष्टौ अधो यास्यसि। किन्तु गृहीयो विषयोऽयम्। एतावद् जानीहि — यदि आरोपः सर्वथा मिथ्या न भवेत्, तर्हि अहं कदापि तव समीपं नागच्छेयम्। बालकस्य माता रोदं रोदं प्राणान् मुमुक्षन्ती वर्तते, वधूः अनशनव्रतमाश्रितवती। सप्तसु दिनेषु गृहे चुल्ली न ज्वलिता। अहं तु स्वल्पं दुग्धं पिबामि, किन्तु श्वश्रूः वधूश्च द्वे अपि निराहारे विद्येते। यदि पुत्रस्य कारावासो भवेत्, तर्हि द्वे अपि मरिष्यतः। यावदस्माकं कनीयान् भ्राता जीवितोऽस्ति तावत् कोऽपि अस्माकं छायामपि स्प्रष्टुं न शक्ष्यतीति कथयित्वा अहं ते आश्वासयम्। तव भ्रातृजाया त्वदीयं पुस्तकमेकं पठितवती। सा तु त्वं देवतुल्यं मन्यते। यदा च कोऽपि विचारः उद्भवति, तदा तव दृष्टान्तं दत्त्वा मां लज्जितं करोति। अहमपि स्पष्टं ब्रवीमि — अहं तस्य पृथुकस्येव बुद्धिं कुतः आनयेयम्? त्वां तस्याः दृष्टौ निपातयितुं त्वां पृथकं मुग्धं

सर्वमपि कथयामि। किन्तु तव पुरस्तात् मम काऽपि शोभा न दीप्यते।

अहं महति सङ्कटे न्यपतम्। मया यावत्यः आपत्तयः सम्भाविताः, तासां सर्वासामपि उत्तरं बलदेवसिंहः प्रथममेव दत्तवान्। तासां पुनरुक्तिः व्यर्था। अहं गत्वा अधिकारिणं वदामि इत्यतः अन्यत् किमपि उत्तरं नाभात्। आम्, एतावत्तु अहं मम सकाशादकथयम्–मम कथनस्य अधिकमवलम्बनं कर्तुं शक्यते इति मम आशा नास्ति यतं हि सार्वकारिकेषु विषयेषु अधिकारिणः सर्वदा स्वानुचरेषु पक्षपातिनं भवन्ति।

बलदेवसिंहः प्रसन्नं भूत्वा अकथयत्— अत्र चिन्ता नास्ति। फाले यल्लिखितं तद् भविष्यत्येव। त्वं गत्वा कथय तावत्।

"भवतु नाम।"

"तर्हि श्वः गमिष्यसि?"

"आम्, अवश्यं गमिष्यामि।"

"एतत् अवश्यं कथनीयं-स्वयं गत्वा भवान् परिवीक्षां करतु इति"

"अस्तु। एतदपि अवश्यं कथयिष्यामि"

" अपि च बलदेवसिंहः मम भ्राता इत्यपि कथयितव्यम् "

" मृषा वक्तुं मां मा स्म निर्बध्नाः

" त्वमम भ्राता नासि !

अहं तु सदा त्वां मम भ्रातरं मन्यमानोऽस्मि "

" अस्तु, एतदपि कथयिष्यामि "

बलदेवसिंहमापृच्छ्य अहं मम लेखं समापयम्। सौख्येन भोजनं कृत्वा च अशयिषि। अहं तस्मादात्मानं मंचयितुं मिथ्याशपथं कृतवान्। मण्डलाधिकारिणे, किमपि वक्तव्यमिति मम आशयः नासीत्।

मया तु कथितमेव आसीत् यत् अधिकारिणः साधारणतया भटानां व्यवहारेषु न प्रविशन्ति। तस्मात् यदि कारावासदण्डोऽपि भवेत्, तर्हि " अधिकारिवर्यः मम वाचं न स्व्यकरोत् " इति वक्तुं पर्याप्तः अवकाशः ममासीत्।

कतिचन दिनानि व्यतीतानि। अहं तु अमुं व्यवहारं पूर्णतया विस्मृतवानास्म्। एकस्मिन् दिने सहसा बलदेवसिंहः मल्लेन स्वपुत्रेण साकं प्राविशत्। पुत्रः मम चरणयोः शिरो न्यधात्, ततः विनयेन एकस्मिन् कोणे अतिष्ठत्।

बलदेवसिंहः अवदत्—सर्वथा साम्प्रतं जातं, भ्रातः। अधिकारिवर्यः भटाधिकारिणमाहूय सम्यगगर्हत यथा

"त्वं साधून् मनुष्यान् पीडयित्वा तेषामपमानं करोषि। यदि पुनरेवं मिथ्यारोपं विधास्यसि, तर्हि उद्योगात् निष्कासयिष्यसे। भटाधिकारी बहु अकम्पत। अहं प्रणम्य तमवन्दिषि। सः अपमानेन स्वगात्राणि एव न्यविशत। तव प्रमापणस्य अयं चमत्कारोऽस्ति भ्रातः। यदि त्वं साहाय्यं नाकरिष्यः, तर्हि वयं नष्टाः अभविष्याम। त्वं चतुर्णां प्राणिनां प्राणान् अरक्षः इति मन्यस्व। अयं त्वरसविधे अतीव भाय भायं समागतः। लोकाः कथयन्ति स्म—"तत्सविधे व्यर्थं गच्छसि। सः अतीव निर्दाक्षिण्यः मनुष्यः अस्ति। तज्ज्ञातिभिः जनैः कस्यापि उपकारो न भवितुं शक्नोति स किल मनुष्यः, यः अन्येषां हितं कुर्यात्। सः कीदृशो मनुष्यः यः अन्येषां नैव शृणोत्यपि।" किन्तु भ्रातः, अहं कस्यापि वाचं न व्यश्वसम्। मम हृदये मम रामः उपविश्य कथयति स्म — त्वं कामं किमदपि रुष्टः निर्दाक्षिण्यश्च स्याः, मयि तु अवश्यं दयां करिष्यसि।

इदमुक्त्वा बलदेवसिंहः भृत्याय सङ्केतमकरोत्। सः बहिः गत्वा एकं महान्तं प्रन्थिमानयत् यस्मिन् विविधानि प्रामीणानि उपायनानि बद्धानि आसन्। यद्यपि अहं सततं "त्वमेतानि वस्तूनि वृथा आनयः, एतेषां का

आवश्यकता आसीत् ? कियद् अज्ञोऽसि, अन्ततोऽपि प्रवीणोऽभूः, अहं किमपि अधिकारिणं नावदं, तस्य सविधेऽपि नाहमगमम् " इति वक्तुं प्रारब्धवान्, तथापि कः शृणोति ? क्षीरसारः, दधि चणकाः, अभिनवो गुडः तथा न जाने किं किमागतम् ।

अहं वक्तव्यमेकया विधया अवोचम्—अहमधिकारि-वर्यस्य सविधेऽपि न गतः यदभूत्, तत् स्वयमभूत्, मम तत्र कोऽपि उपकारः नास्ति । किन्तु अस्यापि केवलं नम्रतया उपायनानि प्रतिनिवर्तयितुं च किमपि व्याजं गवेषयितुमेवं कथयति इति अर्थः कल्पितः । मदीये वचसि विश्वासं जनयितुं पर्याप्तं धैर्यं मम नाभूत् । तस्य योऽर्थः कल्पितः तमेव अहमवाञ्छम् । अयत्नं लब्धं यशः त्यक्तुं मनः नैच्छत् । अन्ते यदाहं दृढमवदं " केनापि अस्य वर्णना न क्रियताम्, अन्यथा मम सविधे प्रार्थनानां राशिः उपस्थास्यते " इति, तदाहं—अहं प्रमापणमकरवं, तदपि निर्भरमकरवम् इति अज्ञयकार्यमिव ।

---

# लाटरी*

आशु श्रीमान् भवितुं कस्य वाञ्छा न भवति ! तेषु दिनेषु यदा लाटरी प्रपत्राणि आगतानि, तदा मम सखा विक्रमः, विक्रमस्य पिता, पितृव्यः, माता तथा भ्राता — इति सर्वः एकैकं प्रपत्रमक्रीणात् । को जानाति कस्य भाग्यं बलवत् ! कस्यापि नाम्ना आगच्छतु, गृह एव रूप्यकाणि वर्तिष्यन्ते ।

परन्तु विक्रमस्य समाधानं नासीत् । अन्यस्य नाम्ना यदि रूप्यकाणि आगच्छन्ति, तर्हि तं कः पृच्छति ! अधिकाधिकं चेत्, तस्मै दश पञ्च वा सहस्राणि ददीरन् । एतावद्भिः रूप्यकैः तस्य किं भवति ! तस्य जीविते उन्नतानि गन्धर्वमन्दिराणि आसन् । प्रथमं तावत् तेन सम्पूर्णस्य जगतः यात्रा कर्तव्या आसीत्, एकैकस्यापि कोनस्य । पेरू, ब्रेसिल्, टिम्बक्टू, होनलुलु—इति

---

*[Lottery इत्यस्य आंग्लशब्दस्य संस्कृते समानशब्दाभावात् स एव शब्दः अत्र प्रयुक्तः । लट लौल्ये इति धातोः भावार्थके घञि लाटशब्दः । लाटं लौल्यं राति ददाति इति लाटरी । स्त्रीत्वं लोकात् ङीप् च गौरादित्वादिति व्युत्पत्तिः कुतो न स्यात् !]

एतानि सर्वाणि तस्य कार्यक्रमे आसन्। सः चण्डमारुतवत् द्वित्रेषु मासेषु सर्वत्र डयित्वा निवर्तमानानां मध्ये नासीत्। सः एकैकस्मिन्नपि स्थाने कतिपयानि दिनानि उषित्वा तत्रत्यं जीवितविधानं, रीतिनीतिनियमादिकं च अध्येतुं तथा विश्वयात्रायाः एकं बृहद्ग्रन्थं लेखितुमिच्छति स। तदुपरि तेन महान् एकः पुस्तकालयो निर्मातव्य आसीत् यस्मिन् जगतः उत्तमाः कृतयः संग्रहीतव्याः आसन्। पुस्तकालयार्थमेव सः लक्षद्वय व्ययितुं सिद्ध आसीत्। भवनं तैलशकटी गृहालङ्करणादिकं तु साधारणो विषयः। पितुः पितृव्यस्य वा नाम्नि रूप्यकाणि आगच्छेयुः चेत्, पञ्चसहस्राधिको वैभवो नास्ति; अम्बायाः नाम्नि तु विंशति सहस्राणि लप्स्यन्ते। किन्तु ज्येष्ठभ्रातुः नाम्नि आगतं चेत्, तर्हि विक्रमस्य हस्ते अर्धाणकमपि न लगति। सः आत्माभिमानी आसीत्। गृहीयेभ्यः बन्धुभ्यः दातस्य वा पुरस्कारस्य वा रूपेण किञ्चिदपि ग्रहणं तस्य अपमानस्थानं भाति स। कथयति स—भ्रातः, कस्यापि अग्रे हस्तप्रसारणात्, कस्मिन्नपि गर्ते पतित्वा मरणं श्रेयः। यदा मनुष्यः स्वस्मै जगति किमपि स्थानं सम्पादयितुं न शक्नुयात्, तर्हि इतः प्रस्थीयताम्।

सः अतीव अशान्तः आसीत् । गृहे लाटरीप्रपत्राय तस्मै को रूप्यकाणि ददाति ? अपि च याचनमपि कथम् ? सः अतीव विचार्य आलोच्य अकथयत्—आवां संविभागेन एकं पत्रं कुतो न क्रीणीयाव ?

विचारः मह्यमपि अरोचत । अहं तेषु दिनेषु शालाध्यापकः आसम् । विंशतिरूप्यकाणि लभ्यन्ते स्म । तावता महता कष्टेन जीवितं चलति स्म । दशरूप्यकाणां प्रपत्रस्य क्रयणं मम धवलागजक्रयणमासीत् । आम्, एकस्मिन् मासे दुग्धस्य घृतस्य उपाहारस्य तथा उपरितनस्य समस्तस्य व्ययः त्यज्येत, तर्हि पञ्चरूप्यकाणां गणना शक्येत । तथापि मनो बिभेति स्म । कुतोऽपि किमपि वित्तं लभ्येत चेत्, तर्हि किञ्चित् धैर्यं वर्धेत ।

विक्रमः अकथयत्— वदसि चेत् तर्हि मदीयमङ्गुलीयकं विक्रेष्यामि । अङ्गुल्याः परिभ्रष्टमिति कथयिष्यामि ।

अङ्गुलीयकं दशरूप्यकेभ्यः हीनं नासीत् । तेन पूर्णं प्रपत्रं लभ्येत । यदि किमपि अव्ययित्वा प्रपत्रे अर्धं स्वाम्यं भवेत् किं मे छिन्नम् ?

सहसा विक्रमः पुनरवदत — किन्तु भ्रातः, त्वया धनं देयम् । अहं पञ्चरूप्यकाणि अगृहीत्वा फले संविभागं नानुमन्ये ।

सम्प्रति मम औचित्यज्ञानमाविरभूत्। अवदम्--न हि भ्रातः, इदमयुक्तम्, चौर्यं चेत् प्रकटीभवेत्, लज्जितैः भवितव्यम् अपि च त्वया साकं ममापि उपरि दूषणमुपतिष्ठते।

अन्ततः एतन्निर्णीतम्---पुरातनानि जीर्णानि पुस्तकानि कस्मिन्नपि उपयुक्तपुस्तकालये विक्रीयन्ताम्, लब्धैः रूप्यकैः प्रपत्रं क्रीयताम् इति। पुस्तकेभ्यः निरुपयोगतरं वस्तु आवयोः सविधे किमपि अन्यत् नासीत्। आवां सहैव मेट्रिकूपरीक्षायां समुत्तीर्णौ। ये अक्षिणी निपीड्य, गृहस्य रूप्यकाणि विनाश्य पदवीः प्राप्तवन्तः, तेऽपि पादुकां सीव्यन्तस्सन्ति इति दृष्ट्वा तत्रैव व्यरमाव। अहं शालाध्यापकः अभवम्, विक्रमः वीथीभ्रमणं प्रारभत। अस्माकं प्राचीनानि पुस्तकानि सम्प्रति वल्मीभिः विना कस्मायपि उपयुक्तानि नासन्। अस्माभिः यावत् लेढुं शक्यमासीत्, लीढम्, तेषां सत्त्वं च निष्कासितम्। इदानीं मूषिकाः लिहन्तु, वल्मयो वा, नास्माकं चिन्ता आसीत्। अथ आवां तानि व्यर्थराशितः निष्कास्य संमार्ज्य एकं महान्तं ग्रन्थिं च अबध्नाव। अहं तु अध्यापकः आसम्, कस्यापि पुस्तकविक्रेतुः आपणे पुस्तकविक्रयणात् अलज्जे। सर्वे मामभिजानन्ति स्म। तस्मादेतत् कर्यं विक्रमस्य हस्ते समर्पितम्। स च

अर्धघण्टायामेव दशरूप्यकपत्रं गृहीत्वा उच्चलन् कूर्दमानश्च आगमत्। अहं तं कदापि एवं प्रसन्नं न दृष्टवानासम्। पुस्तकानि चत्वारिंशद्रूप्यकन्यूनमूल्यानि नासन् किन्तु तस्मिन् दिने तानि दशरूप्यकाणि मार्गे लब्धानीव। इदानीं प्रपत्रे अर्धं स्वाम्यं भविष्यति। दशलक्षरूप्यकाणां वित्तं लप्स्यते। पञ्च लक्षाणि मम मार्गे आगमिष्यन्ति पञ्च विक्रमस्य। आवामस्मिन्नेव विचारे मग्नौ अभूव।

अहं सन्तोषभावं प्रकट्य अकथयम्— पञ्चलक्षाणि नाम अल्पं न भोः। विक्रमस्तु एतावत्सन्तोषी नासीत्। अवदत्–पञ्चलक्षाणां का कथा, अस्माकं तु अद्य पञ्च शतान्यपि वहेव भ्रातः। किन्तु जीवितस्य कार्यक्रमः परिवर्तनीयोऽभूत्। मम यात्रावलीयोजना तु त्यक्तुं न शक्यते। आम्, पुस्तकालयस्तु अदृश्यो जातः।

अहमाक्षिपम्—अन्यतो यात्रायां त्वं लक्षद्वयादधिकं न व्ययिष्यसि किल?

"न भोः। तस्याः व्ययपट्टिका सार्धलक्षत्रयस्य। सप्तवर्षाणां कार्यक्रमः अस्ति। वर्षस्य केवलं पञ्चाशत् सहस्ररूप्यकाणि किल भवन्ति?"

" मासस्य चत्वारि सहस्राणीति ब्रूहि । अहं तर्कयामि, द्वाभ्यां सहस्राभ्यां त्वं महता सुखेन भवितुमर्हसि ।"

विक्रमः किञ्चित् कोपनो भूत्वा अकथयत् " अहं सगौरवं भवितुमिच्छामि । न तु भिक्षुकवत् ।

" द्वाभ्यां सहस्राभ्यामपि त्वं सगौरवं भवितुं शक्ष्यसि "

" यदि भवान् स्वीयांशतः लक्षद्वयं न दास्यति, तर्हि पुस्तकालयो न संभविष्यति ।"

" तव पुस्तकालयः नगर्यामद्वितीयो भवतु इति कापि अवश्यकता नास्ति ।"

" अहं तु अद्वितीयमेव कारयिष्यामि ।"

" तत्र तव स्वातन्त्र्यमस्ति । किन्तु मम धनात् त्वं किमपि न लभसे । मम आवश्यकताः पश्य । त्वदीये गृहे पर्याप्तं स्वं वर्तते । तव शिरसि कोऽपि भारो नास्ति । मम शिरसि तु समस्तस्य गृहस्य भारोऽस्ति । द्वयोः भगिन्योः विवाहः अवशिष्यते, द्वयोः भ्रात्रोः शिक्षापि । नूतनं गृहं निर्माणीयम् । अहं तु सर्वाणि रूप्यकाणि अविलम्बं विचकोशे निवेशयितुं निर्णयं कृतवान् । तेषां वृद्धयैव कर्म निर्वाहयामि । काश्चित् नियमान् एवं विधास्ये यत् तस्मिन् मूलधने मदनन्तरमपि कोऽपि हस्तं न प्रसारयेत् ।"

विक्रमः सहानुभूतिभरितस्वरेण अकथयत् - आम्, अस्यां दशायां त्वचः याचना अन्याय्या । भवतु नाम, अहमेव क्लेशान् सहिष्ये । किन्तु वित्तकोशेषु संप्रति वृद्धेः प्रमाणमतीव न्यूनीकृतम् ।

वयं कतिपयानां वित्तकोशानां वृद्धिप्रमाणं व्यचारयाम —स्थायिकोषस्यापि, रक्षाकोषस्यापि । वृद्धिप्रमाणं नूनं न्यूनमेवासीत् । प्रतिशतं द्वयं सार्धद्वयं वा वृद्धिप्रमाणं स्वीकृत्य धनस्य निक्षेपणं व्यर्थम् । कुसीदमेव कुतो न प्रारभ्यताम् । विक्रमोऽपि सद्यः यात्रायै न याति । द्वयोः साहेन कुसीदकोष्ठं चलिष्यति यदा किञ्चिद् धनं संगृहीतं भविष्यति, तदा स यात्रां करिष्यति । धनस्य दानादान-व्यवहारे वृद्धिरपि अधिका लभ्यते, अस्माकं प्रभाव-प्रतिष्ठे अपि भविष्यतः । आम् , यावत् उत्तमः प्रतिभूः न स्यात् तावत् रूप्यकाणि न दातव्यानि, मनुष्यः कियदपि विश्वासी स्यान्नाम । अपि च प्रातिभुवेन रूप्यकाणि कुतो दद्महे ! स्वं महत् आधारीकृत्य रूप्य-काणि दास्यामः। तदा तु कोऽपि क्लेशो न भविता।

तत् लक्ष्यं निर्णीतम् । अधुना तु प्रपत्रस्योपरि कस्य नामधेयं भवेत् इति प्रश्न उत्थितः । विक्रमः स्वनाम तत्र लेखयितुं महान्तमाग्रहमकरोत् । यदि तस्य

नाम न भवति, तर्हि सः प्रपत्रमेव न ग्रहीष्यति । अहं तु उपायान्तरमदृष्ट्वा अङ्गीकृतवान् । तदपि लेखं विनैव-येन मम उपरिष्टात् महती चिन्ता समुदपद्यत ।

एकैकशः प्रतिपालनस्य दिनानि व्यत्येतुं प्रारभन्त । प्रातरेव अस्माकमक्षिणी दिनपट्टिकां प्रति यातः स्म । मम गृहं विक्रमस्य गृहेण सम्बद्धमासीत् । शालागमनात् प्राक् शालायाः आगमनादनन्तरं च आवां सह उपविश्य स्वीय स्वीयं गन्धर्वनगरं निर्मावः स्म, तदपि यथा कोऽपि न शृणुयात् तथा मृदुस्वरेण । आवां स्वप्रपत्रक्रयणविषयं रहस्यं रक्षितुमैच्छाव । इदं रहस्यं यदा सत्यस्वरूपं धारयति, तदा जनानां कियान् विस्मयः स्यात् । तस्य दृश्यस्य नाटकीयमानन्दं त्यक्तुं नैव आवामैच्छाव ।

एकस्मिन् दिने संभाषणपरयोरावयोः विवाहस्य विचारः आयातः । विक्रमः दार्शनिकेन गाम्भीर्येणाह—भ्रातः, विवाहादिनिर्बन्धान् नाहं पालयितुमिच्छामि । व्यर्था चिन्ता, रोदनं च । पत्न्याः प्रसाधने एव बहूनि रूप्यकाणि अगोचरीभवन्ति ।

अहमस्य विरोधमकार्षम्—आम् , इदं सत्यमेव । किन्तु भद्रा जीवनस्य सुखदुःखयोः सहभागिनी एका नास्ति,

तदा जीवने को वा आनन्दः ! अहं तु विवाहित-जीवनात् एतावद् विरक्तो नास्मि । आम, सहायमेतादृशमिच्छामि, यः आन्तं सह वर्तेत । तादृशः सहायः पत्नीं विना अन्यो न भवितुं शक्नुयात ।

विक्रमः आवश्यकादप्यधिकेन शीघ्रकोपि त्वेन अवदद्-भवतु, तस्य तस्य दृष्टिकोणः भवति । तव पत्नी शाश्वती अस्तु, तस्याः पश्चात् श्ववत् चलनं तथा शिशून् संसारस्य सर्वाधिकां विभूतिम् ईश्वरस्य सर्वाधिकां दयां च यद् भावयसि तदपि शाश्वतमस्तु ।

अयं दासः स्वतन्त्रो भविष्यति, स्वच्छन्दं यदेष्यते तदा शयते, यदेष्यते तदा गृहमागच्छति । न त्वेवं यथा सर्वदा एको भटाधिकारी तव शिरसि उपविष्टः ।

गृहं प्रत्यागमने किञ्चिदिव विलम्बे जाते एव आशु प्रश्नोत्तरिका—एतदवधि क्वासीः ! भवान् क्वापि बहिः प्रचलितः, आश्वेव प्रश्नः श्रूयते—क्व गच्छसि ! अपि च कदापि पत्नी च यदि सार्धे भविष्यति, तर्हि भवतः जले निमज्ज्य मरणाद् अन्यः मार्गो नास्ति । नैव भ्रातः, त्वयि मम ईषदपि सहानुभूतिः नास्ति । शिशोः किञ्चिद् शीतव्याधिः जाते, भवान् निर्विचारं धावसि

वैयगेहम् । वार्धक्ये समुपस्थिते तु ते दुरात्मानः चिन्तयितुं प्रारभन्ते— भवान् कदा प्रस्थानं करिष्यति, ते च विनोदेषु कदा मंक्ष्यन्ति इति । अवकाशे लब्धे तु भवन्त विषं पाययित्वा "प्रवाहिकया मृतः" इति स्थापयन्ति । अहमस्मिन् सङ्कटे न निपतामि ।

कुन्ती आगता । सा विक्रमस्य कनीयसी भगिनी, मासिकं एकादशवर्षवयाः । पञ्चकक्ष्यायां पठति स्म, अविरतं चानुत्तीर्णा । अतीव चटुला, धृष्टा च । एतावता जवेन सा द्वारमपावृणोत् यदावां द्वावपि विचलितौ उदतिष्ठाव ।

विक्रमः कुपितः अकथयत्—त्वं तु महती शाकिनी वर्तसे कुन्ति, कस्त्वामत्र आह्वयत ।

कुन्ती रहस्यमटवत् कोष्ठे दृष्टिं संचार्य अवदत्—युवां सर्वदा अत्र द्वारं पिधाय उपविष्टौ किं वा भावयेथे ! यदा यदापि पश्यामि अत्रैव उपविष्टौ स्थः । न क्वापि परिभ्रमितुं गच्छथः, न विनोदं द्रष्टुम् । कमपि इन्द्रजाल मन्त्रं जागरयन्तौ स्थावम् ।

विक्रमः तस्याः गलं गृहीत्वा कम्पयन् अकथयत्—आम्, एकं मन्त्रं जागरयावः । येन त्वया तादृशी

वरो लभ्येत यः प्रत्यहं कशया गणदन्नेव पञ्च ताडनानि सततं दद्यात् ।

कुन्ती तस्य पृष्ठे उपविष्टा अवदत्—यो ममाग्रे पुच्छं चालयन् तिष्ठेत, तादृशेन वरेणाहं विवाहं करिष्यामि । अहं मिष्टखाद्यस्य खण्डानि क्षिपामि, सः तानि लेक्ष्यति । किञ्चिदपि अविनयं चेद् दर्शयति, तर्हि तस्य कर्णौ मर्दिष्यामि । अम्बया लाटरीधनं चेत् लप्स्यते, मह्यं पञ्चाशत् सहस्राणि दास्यति । अलं, सुखं वर्तिष्ये । अहं द्वयोरपि कालयोः अम्बायाः कृते देवस्य सन्निधौ प्रार्थनां करोमि । अम्बा कथयति—कुमारीणां प्रार्थना कदापि निष्फला न भवति । मम मनः कथयति अम्बया नूनं धनं लप्स्यते ।

मया स्मृतम्, एकदा मयि मातामह्याः ग्रामप्रदेशं याते, तत्र अवग्रहः आसीत् । भाद्रपदमासः उपस्थित आसीत्, किन्तु पानीयस्य बिन्दुरपि न । सर्वे जनाः धनं संगृह्य ग्रामस्य सर्वाभ्यः कुमारीभ्यः भोजनकूटं कल्पितवन्तः । ततः तृतीय एव दिने मुसलधारा वृष्टिः जाता । नूनं कुमारीणां प्रार्थनायाः प्रभावः भवति ।

अहं विकमं भावपूर्णाभ्यामक्षिभ्यामद्राक्षं, विकमश्च माम् । अक्ष्णोरेव आर्वा सूचनाः स्वीकृत्य निर्णयमपि

अकार्ष्व । विक्रमः कुन्तीमब्रवीत्—बाढं, त्वया किञ्चिद् वदामः चेत्, केनापि न कथयसि ननु । नैव, त्वं तु अतीव साध्वी बालिका । केनापि सह न कथयिष्यसि । अहं सम्प्रति त्वां सम्यक् पाठयिष्यामि, उत्तीर्णां च कारयिष्यामि । विषयस्तु आवामपि लाटर्याः एकं प्रपत्रं क्रीतवन्तौ । आवयोरपि कृते ईश्वरे प्रार्थनां कुरुष्व । यदि आवाभ्यां धनं लप्स्यते, तर्हि तव श्रेष्ठानि आभरणानि कारयिष्यावः । सत्यम् ।

कुन्त्याः तत्र विश्वासः नाभूत् । आवां शपथानि अकार्ष्व । सा शीघ्रं नान्वमन्यत । यदा आवां तामापादचूडं स्वर्णरत्नादिभिः विभूषयितुं कृतप्रतिज्ञौ, तदा सा आवाभ्यामपि प्रार्थनां कर्तुमभ्युपागमत् ।

किन्तु मन्ये, तस्याः उदरे मिष्टसार्धं पक्तुं शक्नुयात्, अयमल्पो विषयो न पक्वः सा अन्तरधावत्, क्षणमात्रे च समस्ते गृहे वार्ता प्रसृता ।

संप्रति यं कमपि पश्यत, विक्रमं मत्संपति, अम्बापि, पितृव्योऽपि, पिताऽपि—केवलं विक्रमस्य शुभकामनया वा, अन्येन केनापि भावेन वा, को जानाति—उपविष्टस्य तवाद्भुतायः प्रतिभाति । रूप्यकाणि गृहीत्वा चले अभिर. । गृहे एतावद्भिः प्रपत्राणि क्रीतानि, तव

क्रयणस्य का अपेक्षासीन ? किं तस्मिन्नेव वने त्वया किञ्चिन्न लभ्येत ? अपि च अध्यापकमहाशय, त्वमपि नूनं मूकोऽसि । बालकमुत्तमविषयान् किं बोधयसि, तमधिकं निपातयस्येव ।

विक्रमः प्रियः पुत्रः । तं किं वान्यत् कथयेयुः । रुष्टः सन् दिवारात्रम् अनशनं प्रारभते चेत् आपत्तिः जायेत । सर्वः क्रोधः मयि आपतितः । " अस्य सहवासे बालकः अमार्गे गच्छति । "

परोपदेशपाण्डित्यविषयका गाथा मम अक्ष्णोरग्रे आसीत् । मया मम बाल्यस्य एका घटना स्मृता । होलीपर्वदिनमासीत् । मद्यस्य एकं भाजनमानायित मासीत् । मम मातुलमहाशयः तदा आगत आसीत् । अहं तूष्णीं कोष्ठे गत्वा पानपात्रं स्वल्पं मद्यं स्रावयित्वा अपिबम् । गले ज्वलति सति, अक्ष्णोः लोहितवर्णयोः जायमानयोरेव मातुलमहाशयः कोष्ठे आगतः, मां च सापराधं न्यग्रहीत् । एतावत् सः अकुप्यत — यन्मम हृदयं शुष्कं जातम् । अम्बापि अमर्षयत्, पितापि अमर्षयत् । मया अश्रुभिः तेषां क्रोधाग्निः शमयितव्यः अभूत् । किन्तु मध्याह्न एव मातुलमहाशयः मत्ततया उन्मत्तो भूत्वा गातुं प्रारभत, ततः अरोदीत् , ततः

अम्बायै गालीः अदात् , निषिध्यमानः अपि पितामहं ताडयितुं गतः । अन्ततः वमनं कृत्वा निस्संज्ञः भूमौ पतितः गोचरीभूतः ।

विक्रमस्य पिता ज्यायान् ठाकुरमहाशयः, तत्पितृव्यः कनीयान् ठाकुरमहाशयः—एतौ द्वावपि चार्वाकौ आस्ताम्, पूजापारायणादिकमुपहसन्तौ, पूर्णतया नास्तिकौ च । परन्तु इदानीं द्वावपि अतीव निष्ठावन्तौ ईश्वरभक्तौ च संजातौ । ज्यायान् ठाकुरः प्रातः गङ्गास्नानाय गच्छति, मन्दिरेषु प्रदक्षिणं कृत्वा मध्याह्नात्परं समस्ते शरीरे लिप्तचन्दनः गृहं प्रत्यागच्छति । कनीयान् ठाकुरस्तु गृह एव उष्णोदकेन स्नात्वा सन्धिवातग्रस्तोऽपि रामनाम-लेखनं प्रारभते । आतपे प्रसृते उद्यानवनं गत्वा पिपीलिकाः द्वारे पिष्टं खादयति । सायंकाले द्वावपि भ्रातरौ देवस्थानस्य द्वारे उपविश्य अर्धरात्रपर्यन्तं भागवतकथां तन्मयौ भूत्वा शृणुतः ।

विक्रमस्य ज्येष्ठभ्रातुः प्रकाशस्य तु साधुषु महात्मसु च अधिको विश्वासः । सः मठानां, साधूनामाश्रमाणां कुटीनां च मुहुर्मुहुः दर्शनं करोति । मातुस्तु प्रगेतः अर्धरात्रपर्यन्तं स्नानपूजाप्रतेभ्यः अन्यत् कर्मैव नास्ति । अस्मिन् वयस्यपि तस्याः अलङ्करणे आसक्तिरासीत्, किन्तु अद्य

तनेषु दिनेषु पूर्णतया तपस्विनी जातास्ति। लोकाः मिथ्यैव लालसतां दुष्टां वदन्ति। अहं तर्कयामि— अस्मासु या भक्तिः निष्ठा तथा धर्मप्रीतिरस्ति, सा केवल मस्माकं लालसतायाः आशायाश्च कारणात्। अस्माकं धर्मः अस्मत्स्वार्थबलेन तिष्ठति। आशा मनुष्यस्य मनसि बुद्धौ च एतावन्तं संस्कारं करोतीति ममायं नूनं नूतनः अनुभवः आसीत्। आवां द्वावपि कदाचित् ज्यौतिषि कान् पण्डितांश्च पृष्ट्वा आत्मानं दुःखिनमकार्ष्म। यथा यथा लाटरीदिनं समीपमागमत्, तथा तथा अस्माकं चित्तशान्तिः उड्डीय गच्छति स्म। सर्वदा मनः तत्रैव मग्नं भवति स्म। मम स्वयमेव अकारणः सन्देहो जातः यथा विक्रमो मह्यं धनभागं दातुं निराकरोति यदि, अहं किं करिष्यामि इति। त्वया प्रपत्रे संविभागो न कृतः इति यदि स्पष्टं निराकुर्यात्! किमपि लिखितं नास्ति, नापि अन्यः साक्षी। सर्वं विक्रमस्य नैयत्यावलम्बि। यदि तस्य नैयत्ये मनागपि आन्दोलनं स्यात् तर्हि अहं विनष्ट एव। क्वापि निवेदनां कर्तुं न शक्ष्यामि, मुखमपि व्यादातुं न। यदि इदानीं किञ्चिन् कथयामि तदापि न फलम्। यदि तस्य नैयत्ये लोपः संजात एव, तर्हि अधुनैव सः निराकरोति। यदि न संजातः, तर्हि अनेन

संदेहेन तस्य मर्मवेदना जायते। मनुष्यः एतादृशः नास्ति। किन्तु भ्रातः, विभवं लब्ध्वा प्रामाणिकतायाः पालनं कठिनम्, अद्यावधि तु रूप्यकाणि न लब्धानि। अस्मिन् समये प्रमाणिको भवितुं का वा हानिः? परीक्षायाः समयः तदा आयाति, यदा दशलक्षरूप्यकाणि हस्तगतानि भवन्ति। अहं मदीयमन्तःकरणं परामृशम्—यदि प्रपत्रं मम नाम्नि भवेत्, मया दशलक्षरूप्यकाणि च लभ्येरन्, तर्हि किं रूप्यकाणामर्धांशं विना विकारं विक्रमस्य वशीकुर्याम्? को वक्तुं शक्नुयात्? किन्तु अधिकः सम्भवः अयमेव यदहं व्याजवादं कुर्याम्। कथयेयं च—त्वं मह्यं पञ्चरूप्यकाणामृणं प्रादाः। तस्यार्थे दश गृहाण, शतं गृहाण, किमन्यत् करोपि? परन्तु न हि। मया एतावती अप्रामाणिकता न दृश्यते।

परेद्युः आवां वार्तापत्रिकां पश्यन्तौ आस्व। सहसा विक्रमः अकथयत्—यदि आवयोः प्रपत्रं विजयि स्यात्, तर्हि मम चिन्ता भविष्यति त्वया संविभागः व्यर्थं कृतः इति।

सः सरलभावेन अन्वयत। किन्तु अयं तस्य आननः दोत एव आसीत् यं सः विनोदस्य जवनिकया छादयितुं ऐच्छत्।

अहं चकितः अकथयम्—सत्यम् । किन्तु ममापि एवं चिन्ता उत्पद्येत ननु !

" किन्तु प्रपत्रं मम नास्ति वर्तते खलु ! "

" तेन किम् ! "

" भवतु । चिन्तय तावत्, अहं चेत् तव संविभागं निराकुर्याम् " । मम रक्तं हिमीभूतम् । अक्ष्णोरग्रे अन्धकारः प्रसृतः ।

" अहं त्वां नैतावदप्रामाणिकममन्ये "

" किन्तु सम्भवोऽस्ति । पञ्च लक्षाणि । चिन्तय । मतिः परिभ्राम्यति ! "

" तर्हि भ्रातः इदानीमेव कुशलमस्ति । लिख्यतां प्रमाणम् । अयं संशयो मा भूत् "

विक्रमः हसन्नवदत्—त्वं तु अतीव शङ्काशीलोऽसि भोः । अहं तव परीक्षामकार्षम् । बाढं, एवं कदापि भवेद् वा ! पञ्च लक्षाणामास्तां कथा, पञ्च कोटयः सन्तु कामं, तदापि ईश्वरः इच्छति चेत् , तर्हि नैवत्वे लोभाय अवकाशं न दद्याम् । किन्तु मम तस्य एतासु आश्वासनासु सर्वथा विश्वासो न जातः । मनसि एकः संशयः रूढमूलः अतिष्ठत् ।

अहमकथयम्—"तदहं जानामि। तव नैयत्यं कदापि विचलितं न भविष्यति। किन्तु लिखितपत्रकरणे को विघ्नः?" "तद् व्यर्थम्" "आस्तां व्यर्थमेव"

"तर्हि योग्ये पत्रे लेखितव्यम्। दशलक्षाणां न्याय शुल्कमेव सार्धसप्तसहस्ररूप्यकाणि। भवान् कस्मिन् भ्रमे वर्तते?

अहमचिन्तयं बाढं साधारणस्य लिखितस्य बलेन कमपि शासनक्रमं चालयितुं न शक्ष्यामि। किन्तु एनं लज्जयितुं, दुष्टं दर्शयितुम्, सर्वेषां पुरस्ताद् अप्रामाणिकं साधयितुं च अवसरः मम हस्ते भविष्यति। प्रपञ्चे अपख्यातेः भयं यदि नाभविष्यत्, न जाने मनुष्यः किमकरिष्यत्। अपमानभयं शासनभयात् कथमपि न्यून-क्रियाशालि न भवति। अवदम्—मम साधारणे पत्रे एव विश्वासोऽस्ति।

विक्रमः निश्चिन्ततया अकथयत्—यस्य पत्रस्य किमपि शासनीयं महत्त्वं नास्ति तल्लेखने समयं कुतो नाशयेम?

विक्रमस्य नैयत्ये अधुनैव लोपो जातः इति मम निश्चयः अभूत्। अन्यथा साधारणपत्रलेखने का बाधा भवेत्? पुनितः अवदम्—अधुनैव तव नैयत्यं सदोषं

जातमेव । सः निर्लज्जतया अवदत्— तर्हि एतादृश्या तव नैयत्यं न परिवर्ततमिति किं साधयितुं शक्नुयाः ?

" मम नैयत्यं नैवं दुर्बलम् । "

" आस्तां तावत् । महान् नैयत्यशाली । महतो महीयसो दृष्टवानहम् । "

" त्वया अधुनैव लेखबद्धेन भवितव्यम् । मम तवोपरि विश्वासो नावस्थितः । "

" यदि तव ममोपरि विश्वासो नास्ति, तर्हि अहमपि न लिखामि । "

" तर्हि किं त्वं मदीयानि रूप्यकाणि लुण्ठित्वा गन्तुमनाः असि ? "

" कस्य रूप्यकाणि ? कानि रूप्यकाणि ? "

" अहं ब्रवीमि विक्रम ! अस्माकं मैत्र्याः अयमेव अन्तः स्यात् । अपि च इतोऽपि भयङ्करः परिणामो भविष्यति । "

ममान्तः हिंसायाः एका ज्वाला उत्थितेव ।

सहसा संदर्शनालिन्दात् कलहस्य शब्दं श्रुत्वा मम अवधानं तत्र गतम् । तत्र द्वावपि ठाकुरौ उपविशतः स्म । तयोः एतादृशी मैत्री आसीत् या आदर्शः भ्रात्रोः

एव भवितुं शक्नोति। रामलक्ष्मणयोरपि एतावत्येव स्यात्। कन्दस्य का कथा, अहं तयोः विवादमपि न श्रुतवानासम्। ज्यायान् ठाकुरः यद् अवदत्, तत् कनीयसः ठाकुरस्य शासनायते स्म। कनीयसः ठाकुरस्य मनोगतं ज्ञात्वैव ज्यायान् ठाकुरः किमपि वदति स्म। आवयोः आश्चर्यमभूत्। गत्वा सन्दर्शनालिन्दस्य द्वारे आवां स्थितौ। द्वावपि भ्रातरौ स्वस्य स्वस्य आसन्द्याः उत्थितौ, एकैकं पदमग्रेऽपि निहितवन्तौ आस्ताम्। अक्षिणी लोहिते, मुखं विकृतम्, भ्रुकुटिः बद्धा, मुष्टयश्च बद्धाः। आशु हस्ताहस्ति प्रारभ्यते इति भाति स्म।

कनीयान् ठाकुरः आवां दृष्ट्वा पश्चात् गच्छन् अवदत्—सम्मिलितपरिवारे यत् किमपि यतः कुतोऽपि यस्य कस्यापि नाम्ना आयातु, तत् सर्वेषां स्व, समानतया च।

ज्यायान् ठाकुरो विक्रमं दृष्ट्वा एकं पदमग्रे निधाया-ब्रवीत्—कदापि न। यद्यहं कमप्यपराधं करिष्ये, तर्हि अहमेव निग्रहीष्ये, न सम्मिलितः परिवारः। मया कारावासो लप्स्यते, न सम्मिलितपरिवारेण। अयं वैयक्तिकः प्रश्नः।

"अस्य निर्णयः न्यायालये भविष्यति"

"कामं गच्छतु भवान् न्यायालयम्। यदि मम बालकस्य, मम पत्न्याः अथवा मम नाम्ना लाटरी जेष्यते

तर्हि भवतः तत्र कोऽपि सम्बन्धो नैव भविष्यति यथा भवन्नाम्ना विजितायाः अटव्याः मया मम पत्न्या मम बालकेन च सह सम्बन्धो न भविष्यति।

" भवतो नैयत्यमेतादृशमिति यद्यहमज्ञास्यम्, तर्हि अहमपि पत्न्याः शिशूनां च नाम्नि प्रपत्राणि अक्रेष्यम् "

" अयं भवतो भ्रंशः "

" भवान् भ्राता इति कृत्वा मम विश्वासः आसीत् "

" इदं द्यूतम्। भवता ज्ञातव्यमासीत्। द्यूतस्य जयापजययोः वंशस्योपरि कोऽपि प्रभावो न भवति। यदि भवान् श्वः अश्वद्यूते पञ्चपाणि सहस्राणि अपजित्य आयासि, वंशः तस्य उत्तरदायी न भवति।"

" किन्तु भ्रातुः अधिकारं निरस्य भवान् सुखी भवितुं न शक्नोति "

" भवान् कोऽपि ब्रह्मा न, ईश्वरो न, नापि महात्मा "

भ्रात्रोः मध्ये वैरस्यं सम्वृद्धं, मल्लयुद्ध च बुभूषति इति श्रुत्वा विक्रमस्य माता धावन्ती आगता द्वावपि विवेकं बोधयितुं प्रारभत।

कनीयान् ठाकुरः कुपितः अकथयत्— भवती मां कुतो बोधयति ! यः चत्वारि प्रपत्राणि क्रीतवान् सः बोध्यताम्। मत्सविधे किमस्ति ! एकं प्रपत्रम्। तस्य का

वा आशा ? मदपेक्षया यस्य रूप्यकलाभाय चतुर्गुणः अवकाशो वर्तते, तस्य नैयत्यं लुप्तं चेत्, लज्जायाः दुःखस्य च तत्र स्थानम्।

ठाकुरपत्नी देवरं समादधती अवदत्—बाढम्। मम रूप्यकेषु अर्धं तव। इदानीं तु तुष्टोऽसि ?

ज्यायान् ठाकुरः पत्न्याः जिह्वां न्ययन्त्रयत्। अवदत्—कथमर्धं महीष्यति ? अहमेकमाणकमपि न दास्यामि। वयं दाक्षिण्येन तथा सहृदयतया विचारयामश्चेत्, तथापि तस्य पञ्चमात् अंशादधिकं न भविष्यति। अर्थाय अपेक्षा केन नियमेन भवति ? न बौद्धिकेन, न धार्मिकेण न नैतिकेन।

कनीयान् ठाकुरः परिस्खलन् अकथयत्—समस्तस्य प्रपञ्चस्य शासनं भवानेव जानाति।

" जानाम्येव, त्रिंशद् वर्षाणि न्यायवादी नास्मि ! "

" एषा न्यायवादिता तदा पलायिष्यते यदाहं कलिकतायाः न्यायपीठस्य पुरतः स्थापयिष्यामि। "

" कलिकतायाः वा स्यात्, लण्डन्नगर्याः वा, सः न्यायपीठो निःसंशो भविष्यति। "

' यथा रिचिये, तथा अत्रापि अहमर्धं महीष्यामि "

एतदन्तरे विक्रमस्य ज्यायान् भ्राता शिरसि हस्ते च बद्धपट्टिकः खञ्जन्, वस्त्रेषु नवरक्तस्य अङ्कान् धारयन् प्रसन्नमुख आगत्य एकस्यां सुखासन्द्यां निपतितः, ज्यायान ठाकुरः विक्लवीभूय अपृच्छत्—अङ्ग, एषा तव का स्थितिः? अहो, एतानि व्रणानि कथं जातानि! केनापि सह मुष्टीमुष्टि तु न जातम्! प्रकाशः आमन्थ्यां शयित्वा एकवारं यातनया क्लाम्यन् ततः स्मयमानः अवदत्—तात, कापि चिन्ता नास्ति। अधिकं क्षतमपि न जातम्।

"क्षतं न जातमिति किमिदं वदसि? समस्तो हस्तः शिरश्च विक्षतम्। वस्त्राणि रक्तार्द्राणि। अयं को व्यवहार.? कापि शकटदुर्घटना नाभूत् खलु!

"इदमतीव साधारणं व्रणं पितः, द्वित्रेषु दिनेषु सम्यग् भविष्यति। विक्लवतायाः किमपि कारणं नास्ति।"

प्रकाशस्य मुखे आशापूर्णं शान्तं स्मितमवर्तत। क्रोधस्य लज्जायाः प्रतीकारस्य वा भावनायाः नामापि नासीत्।

ज्यायान् ठाकुरः व्यग्रतरो भूत्वा अपृच्छत्—किन्तु यदभूत्, तत् कुतो न वदसि? केनापि सह कलहो जातश्चेत् तर्हि भटस्थाने निवेदयामि।

प्रकाशो लघुना चेतसा अवदत्— केनापि साकं कलहो न जातः। अस्य कारणं तु अहं झकडबाबस्य समीपं गतवान्, भवन्तो जानन्त्येव— सः जनदर्शने सति पलायते, अश्मानि च गृहीत्वा मारयितुं प्रवर्तते। तदा यो भीत्वा पलायते, स नष्टः। यः अश्मना प्रहृतोऽपि तमनुसरत्येव, सः धन्यः। सः इमामेव परीक्षां करोति। अथाहं यदा तत्र गतः, तदा मार्कि पञ्चाशत् जनाः तत्र मिलिताः— कोऽपि मृष्टान्नमानीतवान्, कोऽपि बहुमूल्यानि उपायनानि, कोऽपि वसनानामावर्तम्। झकडबाबः ध्यानावस्थायामुपविष्ट आसीत्। सहसा सः अक्षिणी उन्मील्य अमुं जनसमूहं दृष्ट्वा कतिपयानि अश्मानि चित्वा तत्पश्चादधावत्। ततः किम्! सकोलाहलं पलायनं प्रारभत। जनाः स्खलन्तः पतन्तश्च अधावन्। अदृश्या जाताः। एकोऽपि न तत्र अवस्थितः। एकाकी अहमेव तत्र घण्टागृहवत् स्थिरः स्थितः। बाबः अश्म प्राक्षिपत्। प्रथमप्रहारः मम शिरसि लग्नः। तस्य लक्ष्यवेधनं निष्कृष्टम्। शिरः स्फुटं भिन्नं, रक्तस्य धारा प्रावहत्। किन्त्वहं न व्यचलम्। ततो बाबवर्यः द्वितीयम् अश्म अक्षिपत्। तत् मम हस्तमविध्यत्। अहं व्यथया निस्संज्ञ इवाभवम्।

यदा पुनः संज्ञा मया लब्धा, तदा तत्र नीरवता आसीत्। बाबत्र्योऽपि अदृश्यतां गतः। स किल तथा अन्तर्हितो भवति। कं तदा आकारयेयं? केन वा वाहनम् आनाययेयम्?। यावन्मया हस्तः मियमानः आसीत्। शिरस्तः अधुनापि रक्तं स्रवति स्म च। कथमपि उदतिष्ठम्, वैद्यस्य च समीपम् अगच्छम्। सः परीक्ष्य अब्रवीत्—अस्थि भग्नम्—ततः पट्टिकामबध्नात्। सुखोष्णजलेन सेक्तुं चाज्ञापितवान्। सायं पुनरागमिष्यति। किन्तु, क्षतं जातं चेत् जातम्; मम नाम्ना लाटरी आगमिष्यतीति दृढम्। अयं निश्चयः। झकड् बाबस्य प्रहारमनुभूय कोऽपि निष्फलो भवतीति इदं न कदापि समभूत्। अहं तु सर्वस्मात् प्राक् बाबाय कुटीं निर्मापयिष्यामि।

ज्यायसः ठाकुरस्य मुखे सन्तोषस्य प्रकाशो दृष्टः। आशु तल्पं कल्पितम्। प्रकाशः तस्मिन् शयितः। ठाकुरपत्नी व्यजनसेवां प्रारभत, तस्याः मुखमपि प्रसन्नमासीत्। एतावत् क्षतमनुभूय दशलक्षाणां प्राप्तिसाधनं नानुचितं वाणिज्यं ननु।

कनीयसः ठाकुरस्य मनस्समुद्रे प्रक्षोभः संजातः। यदा ज्यायान् ठाकुरः भोजनाय गतः, तत्पत्नी च प्रकाशार्थं

भोजनव्यवस्थां कर्तुं गता, तदा कनीयान् ठाकुरः प्रकाश-मपृच्छत्—किं महता वेगेन बाबः अश्म क्षिपति! वेगेन न खलु क्षिपति!

प्रकाशः तदाशयं विज्ञाय अकथयत्—महाशय, सः न अश्म, अपि तु स्फोटगोलिकां क्षिपति। देववत् बाबः पुष्टगात्रः, एकेन मुष्टिप्रहारेण सिंहानपि यमपुरा-तिथीन् कर्तुं शक्तः। साधारणो नरः कोऽपि चेत्, एकेनैव अश्मना पञ्चत्वं प्रयायात्। कत्यपि जना मृताः, किन्तु अद्यावधि बाबस्योपरि व्यवहृतिः न जाता। अपि च सः द्वित्राणि अश्मानि क्षिप्त्वा न विरमति, अपि तु यावत् भवान् न निपतिष्यति, न निस्संज्ञो भविष्यति, तावत् प्रहारमनुवर्तयति। किन्तु इदमेव रहस्यं यावदधिकं भवान् प्रहृतो भवति, तावन्निकटं स्वामीप्सितस आसादयति।

प्रकाशः एतावद् रोमाञ्चकं चित्रं व्यरचयत् यत् कनीयान् ठाकुरः विकम्पितः। अश्मप्रहारानुभवे तस्य धैर्यं नाभूत्।

अन्ततो भाग्योदयस्य दिनमागतम्—जुलैमासस्य विंशी तारिका, निर्णयस्य दिनम्। यदा वयमुत्थिताः प्रातःकाले, तदा आशाभययोर्द्वन्द्वस्य कोऽप्येको मदः अस्मान् आरूढ इवाभात्। द्वावपि ठाकुरौ कल्य एव गङ्गास्नानं विधाय मन्दिरे उपविष्टौ पूजां कुरुतः स्म। अद्य ममापि मनसि श्रद्धा जागृता। मन्दिरं गत्वा मनोहृत्य भगवतः स्तुतिं कर्तुमहमारभे—अनाथनाथ, तव कृपादृष्टिः अस्मासु न भविष्यति वा ? कियता कष्टेन वयं प्रपत्रमक्रीणाम इति किं त्वया न विदितम् ? त्वमपि अन्तर्यामी। अखिले प्रपञ्चे अस्मदधिक स्वदयार्हाः के वा सन्ति ?

विक्रमः वस्त्रसज्जितः देवमन्दिरस्य उपद्वारमागत्य मिमाङ्कितेन आहूय एतदवदत्—" अहं प्रेषालयं (Post Office) गच्छामि "—ततः अगोचरी भूतः। अल्पान्तरे प्रकाशः मिष्टापूपभाजनं वहमानो गृहाद् बहिरागतः। मन्दिरस्य द्वारे तिष्ठन् मिष्टापूपान् दरिद्रेभ्यो वितरीतुं प्रारभत। (दरिद्राणामेकः समूह एव तत्र मिलित आसीत्) द्वावपि ठाकुरौ भगवतः चरणयोः बद्धपद्मासनौ नतमस्तकौ निमीलितनेत्रौ अनुरागमग्नौ उपविष्टौ आस्ताम्।

ज्यायान् ठाकुरः शिरः उन्नमय्य अर्चकं दृष्ट्वा अवदत्-अर्चकवर्य, भगवान् अतीव भक्तवत्सलः खलु !

अर्चकः समर्थनमकरोत्—आम् स्वामिन्, भक्तस्य रक्षायै भगवान् क्षीरसागरात् धावित्वा गजं ग्राहमुखात् पालयामास ।

एकक्षणानन्तरं कनीयान् ठाकुरः शिरः उन्नमय्य अर्चकमब्रवीत्—अर्चकवर्य, भगवान् सर्वशक्तः, अन्तर्यामी, सर्वेषां मनःस्थितिं जानाति खलु !

अर्चकः तस्यापि समर्थनमकरोत्—सत्यं स्वामिन्, यदि अन्तर्यामी नाभविष्यत्, तर्हि सर्वेषां मनोगतं कथमज्ञास्यत् ! शबर्याः प्रेम वीक्ष्य सः स्वयं तस्याः मनःकामनां पूरयामास ।

पूजा समाप्ता अभूत् । आरार्तिकं कृतम् । द्वावपि भ्रातरौ अथ उच्चस्वरेण आरार्तिकगानमकुरुताम् । ज्यायान् ठाकुरः स्थाल्यां द्वे रूप्यके न्यधात् । कनीयान् ठाकुरः चत्वारि रूप्यकाणि न्यधात् । ज्यायान् ठाकुरः एकवारं कोपदृष्ट्या तं दृष्ट्वा मुखं साचीकृतवान् ।

सहसा ज्यायान् ठाकुरः अर्चकमपृच्छत्—तव मनः किं कथयति अर्चकवर्यम् !

अर्चकोऽब्रवीत्—स्वामिनः साफल्यम् ।

कनीयान् ठाकुरः अपृच्छत्—मम च ?

अर्चकः तेनैव मनोभावेन अकथयत्— स्वामिनोऽपि जयः। ज्यायान् ठाकुरः श्रद्धायां निमग्नः—

"प्रभो, अहं तव शरणं प्रपन्नः, प्रभो" इति स्तोत्रं गायन् मन्दिरात् निरगमत्।

निमेषान्तरे कनीयान् ठाकुरोऽपि—हे दयानिधे, मम पक्षं रक्ष, त्वामन्तरा मे गतिः नास्ति इति गायन् मन्दिरात् निरगमत्।

अहमपि अन्वगमम्। मिष्टापूपवितरणे च प्रकाश-महाशयस्य साहाय्यकं कर्तुमपेक्षिपि। सः स्थालीं मद्धस्तात् दूरीकृत्य अवदत्—आस्तां नाम, अहं शीघ्रं वितरिष्यामि। इदानीं कियच्चाम अवशिष्टम्! मयि औदास्येन प्रेषालयं प्रति प्रतिष्ठमाने एव विक्रमः स्मितशाली द्विचक्रीमारूढः तत्र आगमत्। तं दृष्ट्वा सर्वे उन्मत्ता इव अभवन्। द्वावपि ठाकुरौ पुर एव स्थितौ। श्येनाविव तस्योपरि आपतितौ। प्रकाशस्य स्थाल्यां कतिपयानि मिष्टापूपानि शिष्टानि। सः स्थालीं भूमौ क्षिप्त्वा अधावत्। अहं च तेनोन्मादेन विक्रममुरसङ्गेव आरोपितवान्।

किन्तु कोऽपि तं किमपि न पृच्छति, सर्वे केवलं जयघोषमेव कुर्वाणाः सन्ति।

सर्वे पूर्णतया दत्तावधानाः अभूवन्।

"भवतु, शृण्वन्तु कर्णाभ्यां सर्वे। अस्याः नगर्याः एव नाम नास्ति। न केवलमस्याः नगर्याः, सम्पूर्णस्य भरतवर्षस्य कथा गता। अमेरिकायाः एकस्य कृष्णवर्णकस्य नाम विजयमाप्नोत्।

ज्यायान् ठाकुरः जगर्ज—मिथ्या, मिथ्या, सर्वथा मिथ्या।

कनीयान् ठाकुरः स्थितिं परिवर्त्य अवदत्—

कदापि न, मासत्रयस्य तपस्या किं मुधा गता! प्रकाशः उरस्ताडयन् अकथयत्—अत्राहं भिन्नशिराः छिन्नहस्तः तिष्ठामि, किमुपहासं करोषि!।

एतस्मिन्नन्तरे उपपञ्चाशत् संख्याः जनाः विषण्णवदनाः तत्र आगताः। एते वराका अपि स्वादृष्टं निन्दन्तः आयान्ति स्म। अमेरिकायाः कृष्णवर्णकः गृहीत्वा निनाय। अभाग्यः। पिशाचः। दुष्टः।

इदानीं कस्य वा कथं विश्वासो न भवेत्! ज्यायान् ठाकुरः गर्जन् मन्दिरमगात्, अर्चकं च उद्योगात् निरकासयत—एतदर्थमेव त्वामेतावन्ति दिनानि अहं पालितवान्, व्यर्थं खादसि, विनोदे कालं च क्षपयसि।

वान्, सः एकदैव एतावद् अल्पत्वं प्राप्त्, यत् अणुः अभूत्, मम च ह्रासः उत्पन्नः। यथा किल कोऽपि दानशौण्डः मुष्टिपूर्णमन्नं हस्ते धृत्वा एकलक्षजनानां भोजनाह्वानं दद्यात्। अत्र च अस्माकं गृहे एकैकोऽपि मन्यते यत्.........।

अहमपि अहसम्—आम, विषयो वस्तुतः एवमेव, आवां च लेखाय प्राणैरपि अयुध्यावहि। किन्तु, सत्यं वद, तव नैयत्यं सदोषं जातं न वा !

विक्रमः स्मित्वा अवदत्—इदानीं पृष्ट्वा किं करोषि ! जवनिका पिहिता आस्ताम्।

---